१५

ॐ

॥ नमो भगवते वासुदेवाय ॥

---

# अथ श्रीमद्भगवद्गीता

## पाठभेदसहिता

## ॥ श्रीमद्भगवद्गीतापाठक्रमः ॥

---

### ऋष्यादीनामुच्चारः ।

॥ ॐ ॥ अस्य श्रीभगवद्गीतामालामन्त्रस्य भगवान् वेदव्यास ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णपरमात्मा देवता ॥
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे (२।११ पू०) इति बीजम् ।
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज (१८।६६ पू०) इति शक्तिः ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः (१८।६६) इति कीलकम् ॥

### करन्यासः ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः (२।२३०) इत्यङ्गुष्ठाभ्यां नमः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः (२।२३) इति तर्जनीभ्यां नमः ।
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च (२।२४)इति मध्यमाभ्यां नमः ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः (२।२४) इत्यनामिकाभ्यां नमः ।
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः (११।५) इति कनिष्ठिकाभ्यां नमः।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च (११।५) इति करतलकर-पृष्ठाभ्यां नमः ॥ इति करन्यासः ॥

### हृदयादिन्यासः ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः, इति हृदयाय नमः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः, इति शिरसे स्वाहा ।
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च, इति शिखायै वषट् ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः, इति कवचाय हुम् ।
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः, इति नेत्रत्रयाय वौषट् ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च, इति अस्त्राय फट् ॥
इति हृदयादिन्यासः ॥

श्रीकृष्णप्रीत्यर्थं पाठे विनियोगः ॥

---

# ॥ श्रीमद्भगवद्गीताध्यानम् ॥

पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं
व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम् ।
अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनी-
मम्ब त्वामनुसंदधामि भगवद्गीते भवद्वेषिणीम् ॥ १ ॥

नमोऽस्तु ते व्यास विशालबुद्धे
फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारततैलपूर्णः
प्रज्वालितो ज्ञानमयः प्रदीपः ॥ २ ॥

प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये ।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥ ३ ॥

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ४ ॥

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥ ५ ॥

भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोपला[1]
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी
सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्तकः[2] केशवः ॥ ६ ॥

पाराशर्यवचःसरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरं हरिकथासंबोधनाबोधितम् ।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे ॥ ७ ॥

---

१ – '"नीलोत्पला' इति पाठान्तरम् ।
२ – 'कैवर्तके. केशवे' इति पाठान्तरम् ।

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ८ ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ ९ ॥

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवै-
र्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो
यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १० ॥

---

## श्रीमद्भगवद्गीताप्रशस्तिः ।

गीता सुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः[1] ।
या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता[2] ॥ १ ॥
सर्वशास्त्रमयी गीता सर्वदेवमयो[3] हरिः ।
सर्वतीर्थमयी गङ्गा सर्वधर्ममयी[4] दया ॥ २ ॥
गीता गङ्गा च गायत्री गोविन्दो हृदि[5] संस्थितः ।
चतुर्गकारसंयोगात्[6] पुनर्जन्म न विद्यते[7] ॥ ३ ॥

---

१ – 'शास्त्रविस्तरैः' इति पाठः । २ – 'मुखपद्मविनिर्गता' इति पाठः ।
३ – 'सर्ववेदमयो' इति पाठः । ४ – 'सर्वधर्ममयो मनुः' इति पाठः ।
५ – 'गोविन्दो हृदयस्थितः' इति पाठः । 'गोविन्देति हृदि स्थिते' इति च ।
६ – 'चतुर्गकारसंयुक्ते' इति पाठः ।
७ – 'गकारपूर्वाश्चत्वारो रक्षन्ति महतो भयात्' इति श्लोकार्धः क्वचित् पूर्वार्धत्वेन दृश्यते, 'चतुर्गकारसंयोगात्' इत्याद्युत्तरार्धश्च न पठ्यते ।

---

## ॥ अथ प्रथमोऽध्यायः ॥

---

धृतराष्ट्र उवाच ।

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

संजय उवाच ।

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुंगवः ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्वे एव महारथाः ॥ ६ ॥

अस्माकं तु विशिष्टा ये तान् निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥ ७ ॥

---

१. १ – 'समवेता युयुत्सवः' इतिस्थाने 'सर्वक्षत्रसमागमे' इति काश्मीरपाठः ।
१. २ – '°स्तदा' इतिस्थाने '°स्तथा' इति पाठः ।
१. ३ – 'पश्यैतां' इतिस्थाने 'पश्य तां' इति पाठः ।
१. ५ – 'काशिराजश्च' इतिस्थाने 'काशीराजश्च' इति पाठः ।
१. ५ – 'नरपुंगवः' इतिस्थाने 'नरपुंगव' इति पाठः ।
१. ६ – 'सर्वे एव' इतिस्थाने 'सर्वे एते' इति पाठः ।
१. ७ – 'नायका' इतिस्थाने 'नायकान्' इति क्वचित् काश्मीरमातृकासु पाठः ।
१. ७[*१/२] – 'सैन्ये महति ये सर्वे नेतारः(पा. भे., ते नराः) शूरसंमताः' इत्यधिकः श्लोकार्धः क्वचन काश्मीरमातृकासु ।

भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥

---

१. ८ – 'कृपश्च समितिंजयः' इतिस्थाने 'कृपः शल्यो जयद्रथः' इति काश्मीरमातृकासु पाठः ।

१. ८ – 'सौमदत्तिस्तथैव च' इतिस्थाने 'सोमदत्तिर्जयद्रथः' इति नीलकण्ठपाठो वङ्गीयपाठश्च । 'सौमदत्तिश्च वीर्यवान्' इति तु काश्मीरमातृकासु ।

१. ९ – 'मदर्थे' इतिस्थाने 'मदर्थं' इति पाठः ।

१. ९ – 'सर्वे युद्ध°' इतिस्थाने 'नानायुद्ध°' इति काश्मीरपाठः । 'नानाशास्त्र°' इति त्वन्यत्र ।

१. १० – 'तदस्माकं' इतिस्थाने 'तदास्माकं' इति पाठः ।

१. १० – 'भीष्माभिरक्षितम्' इतिस्थाने 'भीमाभिरक्षितम्' इति क्वचित् काश्मीरपाठः ।

१. १० – 'त्विदमेतेषां' इतिस्थाने 'त्विदमेवेदं' इति, 'तुदतां तेषां' इति च पाठौ ।

१. १० – 'बलं भीमाभिरक्षितम्' इतिस्थाने 'धृष्टद्युम्नाभिरक्षितम्' इति पाठः । 'बलं भीष्माभिरक्षितम्' इति तु क्वचित् काश्मीरपाठः ।

१. ११ – 'अयनेषु च' इतिस्थाने 'अयनेषु तु' इति काश्मीरपाठः । अन्यत्राप्युपलभ्यते ।

१. १२ – 'हर्षं' इतिस्थाने 'हर्षे' इति पाठः ।

१. १४ – 'श्वेतैर्हयै°' इतिस्थाने 'श्वेतहयै°' इति पाठः ।

१. १४ – '°र्युक्ते' इतिस्थाने '°र्युद्धे' इति पाठः ।

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥ १८ ॥
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥
अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥

---

१. १६ – 'कुन्तीपुत्रो' इतिस्थाने 'कुन्तिपुत्रो' इति पाठः ।
१. १८ – 'द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते' इतिस्थाने 'पाञ्चालश्च महेष्वासो द्रौपदेयाश्च पञ्च ये (पा. भे., पञ्च च)' इति काश्मीरपाठः ।
१. १८ – 'महाबाहुः' इतिस्थाने 'महेष्वासः' इति पाठः ।
१. १८ – 'शङ्खान्' इतिस्थाने 'शङ्खं' इति पाठः ।
१. १९ – 'व्यदारयत्' इतिस्थाने 'व्यकम्पयत्' इति, 'विदारयन्' इति च पाठौ ।
१. १९ – 'व्यनुनादयन्' इतिस्थाने 'ऽभ्यनुनादयन्' इति काश्मीरपाठः । 'व्यनुनादयत्' इत्यन्यत्र ।
१. २० – '°संपाते' इतिस्थाने '°संघाते' इति पाठः ।
१. २१ – श्लोकार्धयोरन्तराले 'अर्जुन उवाच' इति बहुशो न पठितम्, पठनानर्हं च ।
१. २१ – 'सेनयोरुभयो°' इतिस्थाने 'उभयोः सेनयो°' इति क्वचित् काश्मीरमातृकासु पाठः ।
१. २१ – 'महीपते' इतिस्थाने 'महीपतिः' इति पाठः ।
१. २२ – '°देतान्' इतिस्थाने '°देनान्' इति पाठः ।
१. २२ – 'निरीक्षे' इतिस्थाने 'निरीक्ष्ये' इति प्रामादिकः पाठः ।

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥

भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥ २६ ॥

श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।
तान् समीक्ष्य स कौन्तेयः सर्वान् बन्धूनवस्थितान् ॥ २७ ॥

कृपया परयाविष्टो विषीदन्निदमब्रवीत् ।
दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥

---

१. २३ – '॰नवेक्षे' इतिस्थाने '॰नवेक्ष्ये' इति प्रामादिकः पाठो बहुत्र दृश्यते ।

१. २३ – 'धार्तराष्ट्रस्य' इतिस्थाने 'धृतराष्ट्रस्य' इति क्वचित् पाठः ।

१. २४ – श्लोकार्धयोरन्तराले 'संजय उवाच' इति बहुशो न पठितम्, पठनानर्हं च ।

१. २४ – 'सेनयोरुभयो॰' इतिस्थाने 'उभयोः सेनयो॰' इति क्वचित् काश्मीरमातृकासु पाठः ।

१. २४ – '॰र्मध्ये' इतिस्थाने '॰रस्य' इति भास्करपाठः ।

१. २७ – 'सुहृदश्चैव' इतिस्थाने 'सुहृदश्चापि' इति पाठः । 'सुहृदः श्यालान्' इति तु नेपालपाठः ।

१. २७ – 'समीक्ष्य स' इतिस्थाने 'समीक्ष्य च' इति, 'समीक्ष्याथ' इति च पाठौ ।

१. २८ – '॰विष्टो विषीदन्निदमब्रवीत्' इतिस्थाने '॰विष्टः सीदमानोऽब्रवीदिदम्' इति काश्मीरपाठः, वङ्गपाठश्च । 'युक्तः सीदमानोऽब्रवीदिदम्' इत्यपि क्वचित् ।

१. २८ – श्लोकार्धयोरन्तराले 'अर्जुन उवाच' इति बहुशो न पठितम्, पठनानर्हं च ।

१. २८ – 'दृष्ट्वेमं' इतिस्थाने 'दृष्ट्वेदं' इति, 'दृष्ट्वैनं' इति च पाठौ ।

१. २८ – 'दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्' इतिस्थाने 'दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समवस्थितान्' इति काश्मीरपाठो वङ्गपाठश्च । 'दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समुपस्थितान्' इत्यपि क्वचित् ।

१. २८ – 'युयुत्सुं' इतिस्थाने 'युद्धाय' इति नेपालपाठः ।

सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥

गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा ॥ ३४ ॥

---

१. २९ – 'मम' इतिस्थाने 'सर्व°' इति क्वचित् काश्मीरमातृकासु पाठः ।
१. २९ – 'च परिशुष्यति' इतिस्थाने 'च परिशुष्यते' इति, 'चापि विशुष्यति' इति च पाठौ ।
१. ३० – 'गाण्डीवं स्रंसते' इतिस्थाने 'स्रंसते गाण्डिवं' इति क्वचन काश्मीरमातृकासु पाठः ।
१. ३० – 'मनः' इतिस्थाने 'मतिः' इति पाठः ।
१. ३१ – '°ऽनुपश्यामि' इतिस्थाने 'न पश्यामि' इति क्वचित् पाठः ।
१. ३१ – 'स्वजनमाहवे' इतिस्थाने '°हवे स्वबान्धवान्' इति क्वचिच्छन्दोहीनः पाठः ।
१. ३२ – 'न च राज्यं सुखानि च' इतिस्थाने 'न राज्यं न सुखानि च' इति क्वचित् काश्मीरपाठः ।
१. ३२ – '°र्जीवितेन वा' इतिस्थाने '°र्जीवितेन च' इति पाठः ।
१. ३३ – 'काङ्क्षितं नो' इतिस्थाने 'जीवितं मे' इति प्रायः काश्मीरपाठः ।
१. ३३ – 'त इमेऽवस्थिता' इतिस्थाने 'त एवेमे स्थिता' इति, 'त एव मे स्थिता' इति च पाठौ ।
१. ३३ – 'युद्धे' इतिस्थाने 'योद्धुं' इति पाठः ।
१. ३३ – 'धनानि च' इतिस्थाने 'सुदुस्त्यजान्' इति प्रायः काश्मीरपाठः ।
१. ३४ – 'च पितामहाः' इतिस्थाने 'प्रपितामहाः' इति पाठः ।
१. ३४ – 'संबन्धिनस्तथा' इतिस्थाने 'संबन्धिबान्धवाः' इति पाठः ।

एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥

निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥

अधर्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥

---

१. ३५ – 'किं नु' इतिस्थाने 'किमु' इति काश्मीरपाठः । 'किं तु' इति क्वचित् ।
१. ३७ – 'स्वबान्धवान्' इतिस्थाने 'सबान्धवान्' इति नीलकण्ठ(?)पाठः । अन्यत्रापि क्वचित् ।
१. ३७ – 'स्वजनं' इतिस्थाने 'स्वजनान्' इति पाठः ।
१. ३८ – 'यद्यप्येते' इतिस्थाने 'यद्यथा ते' इति पाठः ।
१. ३८ – 'मित्रद्रोहे' इतिस्थाने 'मित्रद्रोहि' इति क्वचन काश्मीरमातृकासु पाठः ।
१. ३९ – 'प्रपश्यद्भि°' इतिस्थाने 'संपश्यद्भि°' इति क्वचन काश्मीरमातृकासु पाठः ।
१. ४१ – 'कृष्ण' इतिस्थाने 'कृत्स्नाः' इति पाठः ।
१. ४३ – 'उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः' इतिस्थाने 'उत्साद्यते जातिधर्मः कुलधर्मश्च शाश्वतः' इति भास्करपाठः ।
१. ४३ – '°धर्माश्च शाश्वताः' इतिस्थाने '°धर्माः सनातनाः' इति पाठः ।

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥

अहो बत महत् पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अर्जुनविषादो नाम प्रथमोऽध्यायः ॥ १ ॥

---

१. ४४ – ‘उत्सन्न°’ इतिस्थाने ‘उच्छिन्न°’ इति पाठः ।
१. ४४ – ‘°शुश्रुम’ इतिस्थाने ‘°शुश्रुमः’ इति पाठः ।
१. ४५ – ‘हन्तुं स्वजनमुद्यताः’ इतिस्थाने ‘स्वजनान् हन्तुमुद्यताः’ इति पाठः ।
१. ४६ – ‘क्षेमतरं’ इतिस्थाने ‘प्रियतरं’ इति पाठः ।
१. ४७ – अस्य श्लोकस्य पूर्वं ‘संजय उवाच’ इति क्वचिदनावश्यको निर्देशः ।
१. ४७ – ‘विसृज्य’ इतिस्थाने ‘उत्सृज्य’ इति कासुचित् काश्मीरमातृकासु पाठः ।
१. ४७ – श्लोकस्यास्य द्वितीयचतुर्थपादयोः स्थानव्यत्यासः क्वचन दृश्यते ।
१. पुष्पिकायाम् – ‘अर्जुनविषादो’ इतिस्थाने ‘अर्जुनपरिखेदो’ इति, ‘अर्जुनविषादयोगो’ इति, ‘सैन्यदर्शनो’ इति, ‘सैन्योपदर्शनो’ इति च पाठाः ।

## ॥ अथ द्वितीयोऽध्यायः ॥

---

संजय उवाच ।

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच ।

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥
क्लैब्यं मा स्म गमः पार्थ नैतत् त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥

अर्जुन उवाच ।

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावा-
ञ्छ्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

---

२. १ – '°पूर्णाकुलेक्षणम्' इतिस्थाने 'पूर्णमुखेक्षणम्' इति क्वचित् पाठः ।
२. १ – 'विषीदन्त°' इतिस्थाने 'सीदमान°' इति प्रायः काश्मीरपाठो वङ्गपाठश्च ।
२. २ – 'कुतस्त्वा' इतिस्थाने 'कुतस्त्वां' इति पाठः ।
२. २ – 'इदं विषमे' इतिस्थाने 'इदंविषये' इति क्वचित् पाठः ।
२. २ – '°मकीर्तिकर°' इतिस्थाने '°मयशस्कर°' इति पाठः ।
२. ३ – 'क्लैब्यं मा स्म गमः पार्थ' इतिस्थाने 'मा क्लैब्यं गच्छ कौन्तेय' इति वङ्ग-काश्मीरपाठौ, तथा यवद्वीपपाठश्च । अन्यत्रापि बहुशो दृश्यते ।
२. ४ – 'प्रतियोत्स्यामि' इतिस्थाने 'परियोत्स्यामि' इति पाठः ।
२. ५ – 'गुरूनहत्वा' इतिस्थाने 'गुरून् हत्वा' इति क्वचित् प्रामादिकः पाठः ।
२. ५ – 'श्रेयो भोक्तुं' इतिस्थाने 'श्रेयश्चर्तुं' इति काश्मीरपाठः । 'श्रेयस्करं' इत्यपि क्वचिदुपलभ्यते ।
२. ५ – 'भैक्ष°' इतिस्थाने 'भैक्ष्य°' इति बहुशः पाठः ।
२. ५ – 'हत्वार्थकामांस्तु गुरूनिहैव' इतिस्थाने 'न त्वर्थकामस्तु गुरून् निहत्य' इति काश्मीरपाठः ।
२. ५ – '°प्रदिग्धान्' इतिस्थाने '°प्रदग्धान्' इति पाठः ।

न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥

कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वा धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥

न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

संजय उवाच ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

---

२. ६ – 'यदि वा नो' इतिस्थाने 'उत वा नो' इति नेपालपाठः ।

२. ६ – 'तेऽवस्थिताः' इतिस्थाने 'ते नः स्थिताः' इति प्रायः काश्मीरपाठः ।

२. ६ – 'प्रमुखे धार्तराष्ट्राः' इतिस्थाने 'प्राङ्मुखे धार्तराष्ट्राः' इति, 'प्रत्यनीकेषु योधाः' इति च पाठौ ।

२. ७ – 'कार्पण्यदोषोपहतस्वभावः' इतिस्थाने 'कार्पण्यदोषोपहतः स्वभावः' इति नेपालपाठः, तथा 'कार्यं यदेषां महतां स्वभावः' इति कुत्रत्यः पाठः, तावुभावपि प्रामादिकौ ।

२. ७ – 'त्वा' इतिस्थाने 'त्वां' इति पाठः ।

२. ७ – 'मां त्वां' इतिस्थाने 'मां त्वं' इति पाठः ।

२. ८ – '°द्यच्छोक°' इतिस्थाने '°द्यः शोक°' इति, तथा '°द्यः शोष°' इति काश्मीरमातृकासु प्रायः पाठौ ।

२. ८ – 'भूमावसपत्न°' इतिस्थाने 'भूमौ च सपत्न°' इति पाठः ।

२. ९ – 'परंतपः' इतिस्थाने 'परंतप' इति पाठः ।

२. ९ – 'तूष्णीं' इतिस्थाने 'तूष्णी°' इति पाठः ।

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

श्रीभगवानुवाच ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

---

२. १० – 'सेनयोरुभयो°' इतिस्थाने 'उभयोः सेनयो°' इति प्रायो वङ्गपाठः ।

२. १० – 'विषीदन्त°' इतिस्थाने 'सीदमान°' इति प्रायः काश्मीरपाठः ।

२. १० – [*१] 'त्वं मानुष्ये(पा.भे.,षे)णोपहतान्तरात्मा
विषादमोहाभिभवाद्विसंज्ञः ।
कृपागृहीतः समवे(पा.भे.,वी)क्ष्य बन्धू-
नभिप्रपन्नान् मुखमन्तकस्य ॥'
इत्यधिकः काश्मीरपाठे श्लोकः ।

२. ११ – '°नन्वशोचस्त्वं' इतिस्थाने '°ननुशोचस्त्वं' इति भास्करपाठः ।

२. ११ – 'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे' इतिस्थाने 'अशोच्याननुशोचं-(पा. भे., '°नन्वशोच्य°' तथा '°नवशोच°')स्त्वं प्राज्ञवन्नाभिभाषसे' इति काश्मीरपाठः ।

२. ११ – '°नगतासूंश्च' इतिस्थाने '°नगतासून् वा' इति यवद्वीपपाठः ।

२. १२ – 'त्वेवाहं' इतिस्थाने 'ह्येवाहं' इति प्रायः काश्मीरपाठः ।

२. १२ – 'नेमे' इतिस्थाने 'नामी' इति प्रायः काश्मीरपाठः ।

२. १२ – '°मतः' इतिस्थाने '°मितः' इति प्रायः काश्मीरपाठः ।

२. १३ – '°र्धीर°' इतिस्थाने '°र्वीर°' इति पाठः ।

२. १३ – 'मुह्यति' इतिस्थाने 'शोचति' इत्यभिनवगुप्तटीकायां पाठः ।

२. १५ – 'कल्पते' इतिस्थाने 'कम्पते' इति पाठः ।

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्तुमर्हति ॥ १७ ॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥
न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे ॥ २० ॥
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

---

२. १६ – 'विद्यते भावो' इतिस्थाने 'विद्यतेऽभावो' इति माध्वपदच्छेदः ।
२. १६ – '°स्तत्त्व°' इतिस्थाने '°र्वस्तु°' इति पाठः ।
२. १७ – 'कश्चित्' इतिस्थाने 'किंचित्' इति पाठः ।
२. १७ – 'कर्तु°' इतिस्थाने 'पातु°' इति पाठः ।
२. १८ – 'नित्यस्योक्ताः' इतिस्थाने 'नित्यप्रोक्ताः' इति यवद्वीपपाठः ।
२. १८ – 'अनाशिनोऽप्रमेयस्य' इतिस्थाने 'विनाशमव्ययस्यास्य' इति क्वचित् प्रामादिकः पाठः ।
२. १८ – 'अनाशिनो' इतिस्थाने 'विनाशिनो' इति क्वचित् काश्मीरपाठः ।
२. १८ – 'तस्मा°' इतिस्थाने 'यस्मा°' इति यवद्वीपपाठः ।
२. १९ – 'वेत्ति' इतिस्थाने 'वेद' इति पाठः ।
२. १९ – 'न विजानीतो' इतिस्थाने 'नाभिजानीतां' इति यवद्वीपपाठः ।
२. २० – 'भूत्वा भविता' इतिस्थाने 'भूत्वा-अभविता' इति शाङ्करभाष्ये पदच्छेदः ।
२. २० – 'न भूयः' इतिस्थाने 'कदाचित्' इति नेपालपाठः ।
२. २० – 'अजो' इतिस्थाने 'अतो' इति पाठः ।
२. २० – 'शरीरे' इतिस्थाने 'अतीते' इति पाठः ।
२. २१ – 'पुरुषः पार्थ' इतिस्थाने 'पुरुषव्याघ्र' इति पाठः ।
२. २१ – 'कं घातयति हन्ति कम्' इतिस्थाने 'हन्यते हन्ति वा कथम्' इति प्रायशः काश्मीरपाठः ।

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ २२ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

---

२. २२ – 'संयाति' इतिस्थाने 'गृह्णाति' इति, 'देहानि' इति च पाठौ ।
२. २३ – 'क्लेदयन्त्या°' इतिस्थाने 'क्लेशयन्त्या°' इति, 'क्लीबयन्त्या°' इति पाठौ ।
२. २३ – 'मारुतः' इतिस्थाने 'मारुतिः' इति पाठः ।
२. २४ – 'नित्यः सर्वगतः' इतिस्थाने 'नित्यसर्वगतः' इति, 'नित्यः सततगः' इति, च पाठौ ।
२. २५ – '°देवं विदित्वैनं' इतिस्थाने '°देनं विदित्वैवं' इति, '°देवं विदित्वेह' इति, '°देनं विचिन्त्यैव' इति च पाठाः ।
२. २६ – 'अथ चैनं' इतिस्थाने 'अथ वैनं' इति काश्मीरपाठः ।
२. २६ – 'नैनं' इतिस्थाने 'नैवं' इति पाठः ।
२. २७ – 'जातस्य हि' इतिस्थाने 'जातस्यैव' इति पाठः ।
२. २७ – 'ध्रुवो' इतिस्थाने 'ध्रुवं' इति क्वचित् काश्मीरपाठः ।
२. २८ – 'परिदेवना' इतिस्थाने 'परिवेदना' इति क्वचित् पाठः ।

आश्चर्यवत् पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति
श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

---

२. २९ – 'तथैव चान्यः' इतिस्थाने 'तथैनमन्यः' इति, 'तथैवमन्यः' इति च पाठौ ।
२. ३० – '°मवध्यो' इतिस्थाने '°मवद्धो' इति पाठः ।
२. ३० – 'न त्वं शोचितु°' इतिस्थाने 'नानुशोचितु°' इति, 'नात्र शोचितु°' इति च पाठौ ।
२. ३१ – 'स्वधर्ममपि' इतिस्थाने 'स्वधर्ममेव' इति यवद्वीपपाठः ।
२. ३१ – 'न विकम्पितु°' इतिस्थाने 'न त्वं कम्पितु°' इति, 'न प्रकम्पितु°' इति च पाठौ । 'न विकल्पितु°' इति तु यवद्वीपपाठः ।
२. ३१ – 'धर्म्याद्धि' इतिस्थाने 'धर्माद्धि' इति पाठः ।
२. ३१ – 'ऽन्यत्' इतिस्थाने 'ऽन्यः' इति पाठः ।
२. ३२ – 'चोपपन्नं' इतिस्थाने 'चोपनतं' इति पाठः ।
२. ३२ – 'सुखिनः' इतिस्थाने 'सुकृतात्' इति पाठः ।
२. ३३ – 'त्वमिमं धर्म्यं' इतिस्थाने 'त्वं धर्म्यमिमं' इति प्रायो द्राविडपाठः, भास्करपाठश्च । क्वचित् 'त्वं धर्ममिमं' इत्यपि ।
२. ३३ – 'स्वधर्मं' इतिस्थाने 'सुधर्मं' इति, 'स्वधर्म्यं' इति च पाठौ ।
२. ३३ – 'हित्वा' इतिस्थाने 'हत्वा' इति पाठः ।
२. ३४ – 'कथयिष्यन्ति' इतिस्थाने 'कीर्तयिष्यन्ति' इति पाठः ।
२. ३४ – 'तेऽव्ययाम्' इतिस्थाने 'तेऽव्ययम्' इति, 'तेऽव्ययाः' इति च पाठौ ।
२. ३४ – 'चाकीर्ति°' इतिस्थाने 'साकीर्ति°' इति पाठः ।
२. ३४ – '°दतिरिच्यते' इतिस्थाने '°दितिरिच्यते' इति प्रामादिकः पाठः ।

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

---

२. ३५ – 'मंस्यन्ते' इतिस्थाने 'मन्यन्ते' इति पाठः ।
२. ३५ – 'त्वां' इतिस्थाने 'त्वा' इति पाठः ।
२. ३५ – 'येषां' इतिस्थाने 'एषां' इति, 'केषां' इति, 'तेषां' इति च पाठाः ।
२. ३६ – '°वादांश्च' इतिस्थाने '°वाचांश्च' इति पाठः ।
२. ३६ – 'निन्दन्त°' इतिस्थाने 'विदन्त°' इति पाठः ।
२. ३६ – 'दुःखतरं' इतिस्थाने 'दुःखतरे' इति पाठः ।
२. ३७ – 'महीम्' इतिस्थाने 'भुवम्' इति पाठः । 'महिम्' इति च प्रामादिकः ।
२. ३८ – 'ततो युद्धाय' इतिस्थाने 'तस्माद्युद्धाय' इति पाठः ।
२. ३८ – 'युज्यस्व' इतिस्थाने 'युध्यस्व' इति नेपालपाठः ।
२. ३८ – 'नैवं' इतिस्थाने 'नैनं' इति पाठः ।
२. ३९ – 'यया' इतिस्थाने 'यथा' इति पाठः ।
२. ४० – 'नेहाभिक्रम°' इतिस्थाने 'नेहातिक्रम°' इति काश्मीरपाठः ।
२. ४० – 'विद्यते' इतिस्थाने 'दृश्यते' इति पाठः ।
२. ४० – 'स्वल्प°' इतिस्थाने 'सत्व°' इति पाठः ।
२. ४१ – '°यात्मिका' इतिस्थाने '°यात्मका' इति पाठः ।
२. ४१ – '°रेकेह' इतिस्थाने '°रेकैव' इति काश्मीरपाठः ।

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥

यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥

---

२. ४२ – 'प्रवदन्त्यवि॰' इतिस्थाने 'प्रवदन्ति वि॰' इति पाठः ।
२. ४२ – '॰वादरताः' इतिस्थाने '॰वादपराः' इति प्रायः काश्मीरपाठः ।
२. ४३ – '॰फलप्रदाम्' इतिस्थाने '॰फलेप्सवः' इति प्रायः काश्मीरपाठः । '॰फलप्रदाः' इत्यपि क्वचित् ।
२. ४३ – 'क्रिया॰' इतिस्थाने 'कृपा॰' इति पाठः ।
२. ४३ – '॰बहुलां' इतिस्थाने '॰बहुला(:)' इति पाठः । '॰बहुलो' इति तु प्रामादिकः ।
२. ४३ – 'भोगै॰' इतिस्थाने 'भागै॰' इति पाठः ।
२. ४३ – '॰गतिं' इतिस्थाने '॰गतीः' इति पाठः ।
२. ४४ – 'तयापहृत॰' इतिस्थाने 'तथापहृत॰' इति, 'तयापहृत॰' इति च पाठौ ।
२. ४४ – '॰यात्मिका' इतिस्थाने '॰यात्मका' इति पाठः ।
२. ४५ – '॰विषया' इतिस्थाने '॰विचया(?)' इति पाठः ।
२. ४५ – 'निस्त्रैगुण्यो' इतिस्थाने 'निस्त्रैगुण्ये' इति पाठः ।
२. ४५ – 'निर्योगक्षेम आत्मवान्' इतिस्थाने 'निर्योगः क्षेम आत्मनः' इति प्रामादिकः पाठः । 'निर्योगः क्षेम आत्मवान्' इत्यपि क्वचित् ।
२. ४६ – 'उदपाने' इतिस्थाने 'उदकपाने' इति पाठः ।
२. ४६ – 'तावान्' इतिस्थाने 'तावत्' इति पाठः ।
२. ४६ – 'वेदेषु' इतिस्थाने 'भूतेषु' इति पाठः ।
२. ४६ – 'ब्राह्मणस्य' इतिस्थाने 'ब्राह्मण्यस्य' इति पाठः ।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युजस्व योगः कर्मसु कौशलम् ॥ ५० ॥
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

---

२. ४७ – 'कर्मण्येवाधि°' इतिस्थाने 'कर्मण्यस्त्वधि°' इति प्रायः काश्मीरपाठः । क्वचित् 'कर्मणे(?णै)वाधि°' इत्यपि दृश्यते ।

२. ४७ – '°हेतुर्भू°' इतिस्थाने '°हेतुर्भूद्' इति प्रामादिको यवद्वीपपाठः ।

२. ४७ – 'सङ्गोऽस्त्व°' इतिस्थाने 'सङ्गोऽस्तु' इति क्वचित् पाठः । 'सङ्गः स्व°' इति तु यवद्वीपपाठः ।

२. ४८ [ *१ ] – 'यस्य सर्वे समारम्भा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥'
इत्यधिकः काश्मीरपाठे श्लोकः । स तु भास्करपाठे न दृश्यते ।

२. ४९ – 'शरण°' इतिस्थाने 'शरीर°' इति पाठः ।

२. ४९ – '°मन्विच्छ' इतिस्थाने '°मन्विच्छन्' इति नेपालपाठः । क्वचिदन्यत्रापि ।

२. ५० – 'बुद्धियुक्तो' इतिस्थाने 'बुद्ध्या युक्तो' इति पाठः ।

२. ५० – 'जहातीह' इतिस्थाने 'जहातीमे' इति क्वचन काश्मीरपाठः ।

२. ५० – 'योगः कर्मसु कौशलम्' इतिस्थाने 'योगः कर्म सकौशलम्' इति, तथा 'योगकर्मसु कौशलम्' इत्यपि पाठः ।

२. ५१ – 'बुद्धियुक्ता हि' इतिस्थाने 'बुद्धियुक्तात्मा' इति प्रामादिकः पाठः ।

२. ५१ – 'जन्मबन्धविनिर्मुक्ताः' इतिस्थाने 'जन्मबन्धननिर्मुक्ताः' इति, 'कर्मबन्धविनिर्मुक्ताः' इति, 'जन्मकर्मविनिर्मुक्ताः' इति, 'जन्मबन्धविनिर्युक्ताः' इति, 'जना बन्धविनिर्मुक्ताः' इति च पाठाः ।

२. ५२ – 'यदा ते' इतिस्थाने 'यदा त्वं' इति प्रायः काश्मीरपाठः ।

२. ५२ – 'बुद्धिर्व्य°' इतिस्थाने 'बुद्ध्या व्य°' इति प्रायः काश्मीरपाठः ।

२ ५२ – 'व्यतितरिष्यति' इतिस्थाने 'व्यतितरिष्यते' इति, व्यतिकरिष्यति' इति, 'व्यवतरिष्यति' इति च पाठाः ।

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

अर्जुन उवाच ।

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

श्रीभगवानुवाच ।

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥

---

२. ५३ – 'श्रुतिविप्रतिपन्ना ते' इतिस्थाने श्रुतिर्विप्रतिपन्नानां' इति पाठः ।

२. ५३ – 'यदा' इतिस्थाने 'यथा' इति पाठः ।

२. ५३ – 'निश्चला' इतिस्थाने 'निश्चिता' इति प्रायः काश्मीरपाठो, तथा यवद्वीपपाठः । 'निष्फला' इति, 'निश्चलम्' इति चान्यत्र पाठौ ।

२. ५३ – 'समाधा°' इतिस्थाने 'यमादा°' इति यवद्वीपपाठः ।

२. ५३ – '°मवाप्स्यसि' इतिस्थाने '°मवाप्स्यति' इति पाठः ।

२. ५४ – 'स्थितप्रज्ञस्य' इतिस्थाने 'स्थिरप्रज्ञस्य' इति पाठः ।

२. ५४ – 'समाधिस्थस्य' इतिस्थाने 'समाधिस्तस्य' इति पाठः ।

२. ५४ – 'स्थितधीः' इतिस्थाने 'स्थिरधीः' इति प्रायः काश्मीरपाठः । 'वीतधीः' इति क्वचिदन्यत्र ।

२. ५४ – 'प्रभाषेत' इतिस्थाने 'विभाषेत' इति पाठः ।

२. ५४ – 'किमासीत व्रजेत किम्' इतिस्थाने 'समासेत व्रजेत काम्' इति क्वचित् पाठः ।

२. ५४ – 'व्रजेत' इतिस्थाने 'व्रजेच्च' इति प्रायः काश्मीरपाठः ।

२. ५५ – 'प्रजहाति' इतिस्थाने 'प्रजहासि' इति पाठः ।

२. ५५ – 'यदा' इतिस्थाने 'यथा' इति पाठः ।

२. ५५ – 'प्रजहाति यदा' इतिस्थाने 'यदा संहरते' इति यवद्वीपपाठः ।

२. ५५ – 'आत्मन्येवा°' इतिस्थाने 'आत्मनेवा°' इति पाठः ।

२. ५५ – 'तुष्टः' इतिस्थाने 'तुष्टिः' इति, 'हृष्टः' इति च पाठौ ।

२. ५५ – 'स्थितप्रज्ञ°' इतिस्थाने 'स्थिरप्रज्ञ°' इति पाठः । 'स्थितः प्रज्ञः' इति तु प्रामादिकः ।

२. ५५ – 'तदोच्यते' इतिस्थाने 'स उच्यते' इति यवद्वीपपाठः । 'तथोच्यते' इति क्वचिदन्यत्र दृश्यते ।

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥

यः सर्वत्रानभिस्नेहस्तत्तत् प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥

---

२. ५६ – 'सुखेषु' इतिस्थाने 'सुखेषु' इति पाठः ।

२. ५६ – 'स्थितधी°' इतिस्थाने 'स्थिरधी°' इति प्रायः काश्मीरपाठः । 'वीतधीः' इति क्वचिदन्यत्र ।

२. ५६ – '°रुच्यते' इतिस्थाने '°रच्युत' इति पाठः ।

२. ५७ – '°स्नेह°' इतिस्थाने '°ज्ञेय°' इति पाठः ।

२. ५७ – '°नन्दति' इतिस्थाने '°निन्दति' इति पाठः ।

२. ५७ – 'न द्वेष्टि' इतिस्थाने 'च द्वेष्टि' इति पाठः ।

२. ५७ – 'तस्य प्रज्ञा प्रतिष्ठिता' इतिस्थाने 'स्थिरप्रज्ञस्तदोच्यते' इति पाठः ।

२. ५८ – 'यदा' इतिस्थाने 'यथा' इति पाठः ।

२. ५८ – 'ऽङ्गानीव' इतिस्थाने 'ऽङ्गानि च' इति पाठः । 'ऽङ्गानेव' इति तु प्रामादिकः ।

२. ५८ – 'सर्वशः' इतिस्थाने 'सर्वतः' इति पाठः ।

२. ५८ – 'तस्य प्रज्ञा प्रतिष्ठिता' इतिस्थाने 'स्थिरप्रज्ञस्तदोच्यते' इति, 'स्थितप्रज्ञस्तदोच्यते' इति वा प्रायः काश्मीरपाठः ।

२. ५९ – 'विषया विनिवर्तन्ते' इतिस्थाने 'विषयाभिनिवर्तन्ते' इति पाठः ।

२. ५९ – 'रसवर्जं' इतिस्थाने 'रसवर्ज्यं' इति पाठः ।

२. ५९'[*१] – 'जिह्वोपस्थनिमित्तं हि प्रवृत्तिः सर्वदेहिनाम् ।
तस्मादमित्रवत् पश्येज्जिह्वोपस्थौ विचक्षणः ॥
इत्यधिकः श्लोको यवद्वीपपाठे ।

२. ६० – 'यततो ह्यपि' इतिस्थाने 'यततोऽपि हि' इति पाठः । 'यत् तस्यापि हि' इति तु काश्मीरपाठः ।

२. ६० – 'पुरुषस्य' इतिस्थाने 'नरस्य तु' इति पाठः । 'पुरुषस्या°' इति च क्वचिदुपलभ्यते ।

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥ ६२ ॥

क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥ ६३ ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

---

२. ६१ – 'सर्वाणि संयम्य' इतिस्थाने 'संयम्य मनसा' इति प्रायः काश्मीरपाठः । 'सर्वाणि संगम्य' इति तु क्वचित् ।

२. ६१ – 'युक्त' इतिस्थाने 'यत' इति पाठः ।

२. ६१ – 'मत्परः' इतिस्थाने 'तत्परः' इति क्वचित् काश्मीरपाठः ।

२. ६१ – 'वशे हि' इतिस्थाने 'वशे' इति पाठः ।

२. ६१ – 'तस्य प्रज्ञा प्रतिष्ठिता' इतिस्थाने 'स्थिरप्रज्ञः स उच्यते' इति पाठः ।

२. ६२ – 'विषयान्' इतिस्थाने 'विषयात्' इति पाठः ।

२. ६२ – '°स्तेषूप°' इतिस्थाने '°स्तेष्वभि°' इति, '°स्तेष्वप°' इति च पाठौ ।

२. ६३ – 'स्मृतिविभ्रमः' इतिस्थाने 'विस्मृतिभ्रमः' इति पाठः । 'सृतिविभ्रमः' इत्यपि क्वचित् ।

२. ६३ – 'बुद्धिनाशात्' इतिस्थाने 'तथा च तत्' इति पाठः ।

२. ६४ – '°वियुक्तैस्तु' इतिस्थाने '°वियुक्तैश्च' इति, '°विमुक्तैश्च' इति, '°विमुक्तैस्तु' इति, '°वियुक्तश्च' इति, '°विमुक्तश्च' इति, '°विमुक्तस्तु' इति च पाठभेदाः ।

२. ६४ – 'विषयानिन्द्रियै°' इतिस्थाने 'विषयाणीन्द्रियै°' इति पाठः ।

२. ६४ – 'आत्मवश्यैर्वि°' इतिस्थाने 'आप्तवश्यैर्वि° इति, 'आत्मवश्यो वि°' इति च पाठौ ।

२. ६४ – '°मधिगच्छति' इतिस्थाने '°मभि गच्छति' इति पाठः ।

२. ६५ – 'पर्यवतिष्ठते' इतिस्थाने 'पर्यवतिष्ठति' इति पाठः । 'पर्यवतिष्ठत' इति तु प्रामादिकः ।

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत् कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

---

२. ६६–६७ – एतौ श्लोकौ राजानकरामकविना न पठितौ । अन्यत्र तु ७०श्लोकस्य पूर्वं तावेव पठितौ ।

२. ६६ – 'न चाभावयतः' इतिस्थाने 'न च भावयतः' इति पाठः ।

२. ६७ – 'हि चरतां' इतिस्थाने 'विचरतां' इति पाठः ।

२. ६७ – 'हरति' इतिस्थाने 'हरते' इति पाठः ।

२. ६७ – 'प्रज्ञां' इतिस्थाने 'प्राज्ञां' इति, 'प्रज्ञा(ः)' इति च पाठौ ।

२. ६८ – 'सर्वशः' इतिस्थाने 'सर्वतः' इति पाठः ।

२. ६८ – 'तस्य प्रज्ञा प्रतिष्ठिता' इतिस्थाने 'स्थिरप्रज्ञा च सा स्मृता' इति पाठः ।

२. ६९ – 'यस्यां जाग्रति' इतिस्थाने 'तस्यां जाग्रति' इति, 'यस्यां जाग्रन्ति' इति, 'यस्यां जागर्ति' इति च प्रामादिकाः पाठाः ।

२. ६९ – 'सा निशा' इतिस्थाने 'सा रात्रिः' इति प्रायः काश्मीरपाठः ।

२. ७० – 'आपूर्यमाण°' इतिस्थाने 'अपूर्यमाण°' इति पाठः ।

२. ७० – '°मचलप्रतिष्ठं' इतिस्थाने '°मचलप्रतिष्ठितं' इति, '°मचलं प्रतिष्ठितं' इति च पाठौ ।

२. ७० – '°मापः' इतिस्थाने '°मापाः' इति प्रामादिकः पाठः ।

२. ७० – 'यद्वत्' इतिस्थाने 'तद्वस्' इति पाठः ।

विहाय कामान् यः सर्वान् पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

इति श्रीमद्भगवद्गीतासूनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

२. ७१ – 'कामान् यः सर्वान्' इतिस्थाने 'सर्वान् यः कामान्' इति पाठः ।
२. ७१ – 'निर्ममो' इतिस्थाने 'निर्मयो' इति पाठः ।
२. ७१ – 'शान्ति°' इतिस्थाने 'शान्त°' इति पाठः ।
२. ७१ – '°मधिगच्छति' इतिस्थाने '°मभि गच्छति' इति पाठः ।
२. ७२ – 'एषा' इतिस्थाने 'एषां' इति पाठः । 'एष' इति क्वचित् प्रामादिकः पाठः ।
२. ७२ – 'ब्राह्मी' इतिस्थाने 'ब्रह्मी' इति पाठः ।
२. ७२ – 'विमुह्यति' इतिस्थाने 'विमुह्यसि' इति, 'विमुच्यति' इति च पाठौ । 'न मुह्यति' इति तु प्रामादिकः ।
२. ७२ – '°कालेऽपि' इतिस्थाने '°काले तु' इति पाठः ।
२. ७२ – '°मृच्छति' इतिस्थाने '°मृच्छसि' इति पाठः । '°मिच्छति' इति तु नेपाल-पाठः । अन्यत्र '°मृच्छतु' इत्यपि क्वचित् ।
२. पुष्पिकायाम् – 'सांख्ययोगो' इतिस्थाने इन्द्रियसंयमयोगो' इति, 'योगशास्त्रनिर्णयो' इति, 'योगशास्त्रस्मृतिको' इति, 'सांख्यस्य योगस्य च विवरणो' इति च पाठान्तराणि ।

# अथ तृतीयोऽध्यायः ।

---

अर्जुन उवाच ।

ज्यायसी चेत् कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत् किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

श्रीभगवानुवाच ।

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम् ॥ ३ ॥

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

---

३. १ – 'मता बुद्धि°' इतिस्थाने 'मनो बुद्धि°' इति पाठः ।
३. २ – 'व्यामिश्रेणेव' इतिस्थाने 'व्यामिश्रेणैव' इति बह्वीषु प्राचीनमातृकासु पाठः ।
३. २ – 'बुद्धिं मोह°' इतिस्थाने 'बुद्धिर्मोह°' इति प्रामादिकः पाठः ।
३. २ – '°माप्नुयाम्' इतिस्थाने 'प्राप्नुयात्' इति प्रामादिकः पाठः ।
३. ३ – 'द्विविधा' इतिस्थाने 'विविधा' इति क्वचित् पाठः ।
३. ३ – 'पुरा प्रोक्ता मया' इतिस्थाने 'मया प्रोक्ता पुरा' इति पाठः ।
३. ३ – 'योगिनाम्' इतिस्थाने 'कर्मिणाम्' इति क्वचित् पाठः ।
३. ४ – 'न च' इतिस्थाने 'न हि' इति, 'नैव' इति च पाठौ ।
३. ४ – 'सिद्धिं समधिगच्छति' इतिस्थाने 'संसिद्धिमधिगच्छति' इति पाठः ।
३. ४ – 'समधिगच्छति' इतिस्थाने 'समधिगच्छसि' इति प्रामादिकः पाठः ।
३. ५ – 'ह्यवशः' इतिस्थाने 'स्ववशः' इति पाठः ।
३. ५ – 'सर्वः' इतिस्थाने 'सर्व°' इति नेपालपाठः । 'सर्वैः' इति तु कासुचित् काश्मीरमातृकासु पाठः ।

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

---

३. ६ – 'य आस्ते' इतिस्थाने 'आस्ते च' इति, 'यद्यास्ते' इति च क्वचित् पाठौ ।
३. ६ – 'मिथ्याचारः' इतिस्थाने 'मूढाचारः' इति क्वचित् काश्मीरपाठः ।
३. ७ – '°म्यारभतेऽर्जुन' इतिस्थाने '°म्यारभते नरः' इति क्वचित् पाठः ।
३. ७ – '°मसक्तः' इतिस्थाने '°मशक्तः' इति प्रामादिकः पाठः । '°मव्यक्तः' इति तु क्वचिदुपलभ्यते ।
३. ९ – 'यज्ञार्थात्' इतिस्थाने 'यक्षा(!)र्थात्' इति पाठः ।
३. ९ – 'कर्मबन्धनः' इतिस्थाने 'धर्मबन्धनः' इति क्वचित् पाठः ।
३. ९ – 'तदर्थं कर्म' इतिस्थाने 'तदर्थंकर्म' इति नेपालपाठः ।
३. १० – 'सहयज्ञाः' इतिस्थाने 'सह यज्ञैः' इति रामानुजीयः पाठः ।
३. १० – 'एष वो' इतिस्थाने 'एष नो' इति क्वचित् पाठः ।
३. १० – '°कामधुक्' इतिस्थाने '°कर्मकृत्' इति क्वचित् पाठः । '°कामभुक्' इति तु प्रामादिकः ।
३. ११ – 'भावयन्तु वः' इतिस्थाने 'भावयन्तु वा' इति रामकविपाठः ।
३. ११ – 'श्रेयः' इतिस्थाने 'श्रेयान्' इति प्रामादिकः पाठः ।
३. ११ – '°मवाप्स्यथ' इतिस्थाने 'मवाप्स्यसि' इति पाठः ।
३. १२ – 'भोगान्' इतिस्थाने 'कामान्' इति प्रायः काश्मीरपाठः ।
३. १२ – '°र्दत्तानप्र°' इतिस्थाने '°र्दत्तं न प्र°' इति पाठः ।

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

---

३. १३ – '°शिष्टाशिनः' इतिस्थाने '°शिष्टाशनाः' इति पाठः ।
३. १३ – 'भुञ्जते' इतिस्थाने 'भुञ्जन्ते' इति कासुचित् काश्मीरमातृकासु प्रामादिकः पाठः ।
३. १३ – 'भुञ्जते ते त्वघं' इतिस्थाने 'ते त्वघं भुञ्जते' इति कासुचिद्दाक्षिणात्यमातृकासु पाठः ।
३. १३ – 'पापाः' इतिस्थाने 'पापं' इति क्वचित् पाठः ।
३. १३ – 'पचन्त्यात्म°' इतिस्थाने 'चरन्त्यात्म°' इति यवद्वीपपाठः ।
३. १४ – 'यज्ञाद्भवति' इतिस्थाने 'धर्माद्भवति' इति पाठः ।
३. १४ – 'यज्ञः कर्म°' इतिस्थाने 'यज्ञकर्म°' इति पाठः ।
३. १५ – 'ब्रह्मोद्भवं' इतिस्थाने 'कर्मोद्भवं' इति पाठः ।
३. १५ – '°समुद्भवम्' इतिस्थाने '°समुद्भवः' इति पाठः ।
३. १६ – 'चक्रं' इतिस्थाने 'कर्म' इति पाठः ।
३. १६ – 'नानुवर्तयतीह' इतिस्थाने 'नानुवर्तयते ह' इति पाठः । क्वचित्तु 'नानुवर्तयतीव' इत्यपि दृश्यते ।
३. १६ – 'अघायु°' इतिस्थाने 'अल्पायु°' इति पाठः ।
३. १७ – 'यस्त्वात्म°' इतिस्थाने 'यश्चात्म°' इति प्रायः काश्मीरमातृकासु पाठः । 'तस्मात् स्व°' इति तु क्वचिन्मातृकान्तरे ।
३. १७ – '°दात्मतृप्त°' इतिस्थाने '°दात्मतृप्ति°' इति पाठः ।
३. १७ – 'मानवः' इतिस्थाने 'मानवैः' इति पाठः ।
३. १७ – 'आत्मन्येव च' इतिस्थाने 'आत्मन्येव वि°' इति, 'आत्मनैव च' इति च पाठौ ।
३. १७ – 'कार्यं' इतिस्थाने 'वाक्यं' इति पाठः ।

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥

---

३. १८ – 'नाकृतेनेह' इतिस्थाने 'नाकृतेनापि' इति पाठः ।
३. १८ – 'कश्चन' इतिस्थाने 'किंचन' इति, 'कस्यचित्' इति च पाठौ ।
३. १९ – 'समाचर' इतिस्थाने 'समाचरेत्' इति, 'समाचरः' इति च पाठौ ।
३. १९ – 'असक्तो ह्याचरन्' इतिस्थाने 'असक्तोऽप्याचरन्' इति पाठः ।
३. १९ – 'परमाप्नोति' इतिस्थाने 'परं प्राप्नोति' इति पाठः ।
३. १९ – 'पूरुषः' इतिस्थाने 'पूरुषम्' इति, 'पौरुषः' इति च पाठौ ।
३. २१ – '°दाचरति' इतिस्थाने '°दाचरते' इति पाठः ।
३. २१ – '°स्तत्तदेवेतरो' इतिस्थाने '°स्तत्तु देवेतरो' इति क्वचित् पाठः ।
३. २१ – 'प्रमाणं' इतिस्थाने 'प्रणामं' इति प्रामादिकः पाठः ।
३. २२ – 'किंचन' इतिस्थाने 'कंचन' इति पाठः ।
३. २२ – 'नानवाप्त°' इतिस्थाने 'नानुवाप्त°' इति पाठः ।
३. २२ – '°मवाप्तव्यं' इतिस्थाने '°मवाप्तं वा' इति पाठः ।
३. २२ – 'वर्त एव च' इतिस्थाने 'प्रवर्तेऽथ च' इति प्रायः काश्मीरपाठः । 'वर्ताम्येव च कर्मणि' इति तु भास्करपाठः ।
३. २३ – 'यदि ह्यहं न वर्तेयं' इतिस्थाने 'यदहं न च वर्तेयं' इति, 'यदि ह्यहं न वर्तेय' इति, 'यद्यहं [न] प्रवर्तेयं' इति च पाठाः । भास्करपाठस्तु 'यद्यहं न प्रवर्तेय' इति ।
३. २३ – '°नुवर्तन्ते' इतिस्थाने '°नुवर्तेरन्' इति प्रायः काश्मीरपाठः ।

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

तत्त्ववित् तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

---

३. २४ – '°रिमे' इतिस्थाने '°रमी' इति पाठः ।
३. २४ – 'चेदहम्' इतिस्थाने 'चेदिह' इति पाठः ।
३. २४ – 'संकरस्य च' इतिस्थाने 'संकरस्य तु' इति पाठः ।
३. २४ – 'स्यामुप°' इतिस्थाने 'स्यामप°' इति पाठः । 'स्यादुप°' इति तु प्रामादिकः ।
३. २६ – 'जोषयेत्' इतिस्थाने 'सेवयेत्' इति, 'जो[यो]जयेत्' इति च पाठौ । 'ज्योषयेत्' इति तु प्रामादिकः ।
३. २६ – 'युक्तः' इतिस्थाने 'मुक्तः' इति पाठः ।
३. २६ – 'समाचरन्' इतिस्थाने 'समाचरेत्' इति पाठः ।
३. २७ – 'प्रकृतेः' इतिस्थाने 'प्राकृतैः' इति पाठः। 'प्रकृतैः' इति, 'प्रकृते' इति च प्रामादिकौ ।
३. २७ – 'सर्वशः' इतिस्थाने 'भागशः' इति प्रायः काश्मीरपाठः ।
३. २७ – 'मन्यते' इतिस्थाने 'मन्यसे' इति प्रामादिकः पाठः ।
३. २८ – '°विभागयोः' इतिस्थाने '°विभागशः' इति पाठः ।
३. २८ – 'गुणेषु' इतिस्थाने 'गुणार्थे' इति प्रायः काश्मीरपाठः ।
३. २८ – 'वर्तन्त' इतिस्थाने 'वर्तन्ते' इति संधिरहितः पाठो बह्वीषु मातृकासु दृश्यते ।
३. २८ – 'सज्जते' इतिस्थाने 'मज्जते' इति पाठः । 'सञ्जते' इति तु प्रामादिकः ।
३. २९ – 'सज्जन्ते' इतिस्थाने 'सज्जन्ति' इति पाठः । 'सज्यते' इति तु प्रामादिकः पाठः ।
३. २९ – '°नकृत्स्नविदो मन्दान् कृत्स्नविन्न' इतिस्थाने '°नकृष्णविदो मन्दान् कृष्णविन्न' इति पाठः ।

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

---

३. ३० – 'संन्यस्या°' इतिस्थाने 'विनस्या°' इति पाठः ।

३. ३१ – 'ये मे' इतिस्थाने 'ये ये' इति पाठः ।

३. ३१ – '°मिदं' इतिस्थाने '°मिमं' इति पाठः ।

३. ३१ – '°तिष्ठन्ति' इतिस्थाने '°वर्तन्ति' इति काश्मीरपाठः ।

३. ३१ – 'मुच्यन्ते तेऽपि कर्मभिः' इतिस्थाने 'मुच्यन्ते ते हि कर्मभिः' इति, 'मुच्यन्ते सर्वकर्मभिः' इति च क्वचित् पाठभेदौ । 'मुच्यन्ते सर्वकिल्बिषैः' इति तु प्रायः काश्मीरपाठः । भास्करपाठस्तु 'ते विमुच्यन्ति कर्मभिः' इति ।

३. ३२ – '°दभ्यसूयन्तो' इतिस्थाने '°दभ्यसूयन्ते' इति पाठः ।

३. ३२ – '°तिष्ठन्ति' इतिस्थाने '°वर्तन्ति' इति काश्मीरपाठः ।

३. ३२ – 'मे मतम्' इतिस्थाने 'मे[ऽ]मृतम्' इति पाठः ।

३. ३२ – 'विद्धि नष्टानचेतसः' इतिस्थाने 'विनष्टान् विद्ध्यचेतसः' इति प्रायः काश्मीरपाठः । 'विद्धि नष्टान् विचेतसः' इत्यपि क्वचित् ।

३. ३३ – 'करिष्यति' इतिस्थाने 'करिष्यसि' इति प्रामादिकः पाठः ।

३. ३४ – '°न्द्रियस्यार्थे' इतिस्थाने '°द्रियार्थेभ्यो' इति, तथा '°न्द्रियार्थे ह' इति, '°न्द्रियस्यार्थौ' इति च पाठभेदाः ।

३. ३४ – 'परिपन्थिनौ' इतिस्थाने 'परिबन्धिनौ' इति पाठः ।

३. ३५ – 'श्रेयान् स्व°' इतिस्थाने श्रेयांस्व°' इति, श्रेयान् सु°' इति च पाठौ ।

३. ३५ – 'स्वधर्मे' इतिस्थाने 'स्वधर्मो' इति पाठः ।

३. ३५ – 'परधर्मो भयावहः' इतिस्थाने 'परधर्मोदयादपि' इति प्रायः काश्मीरपाठः ।

अर्जुन उवाच ।

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥**

श्रीभगवानुवाच ।

**काम एष क्रोध एष रजोगुणसमुद्भवः ।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

---

३. ३६ – 'प्रयुक्तो' इतिस्थाने 'प्रमुक्तो' इति पाठः ।

३. ३६ – 'अनिच्छन्नपि वार्ष्णेय बलादिव' इतिस्थाने 'अनिच्छमानोऽपि बलादाक्रम्यै-(पा. भे., 'म्ये')व' इति प्रायः काश्मीरपाठः । 'अनिच्छन्नपि' इतिस्थाने 'अनिच्छन्निव' तथा 'बलादिव' इतिस्थाने 'बलादपि' इति क्वचिन्मातृकासु पाठभेदौ दृश्येते । 'बलादाताड्येव' इति तु यादवप्रकाशनिर्दिष्टः पाठः ।

३. ३७ – 'काम एष क्रोध एष' इतिस्थाने 'काम एव क्रोध एप' इति, 'काम एष क्रोध एव' इति च पाठौ ।

३. ३७ – 'वैरिणम्' इतिस्थाने 'वैरिणाम्' इति पाठः ।

३. ३७ – [ *१ ] '[ अर्जुन उवाच । ]

भवत्येष कथं कृष्ण कथं चैव [पा. भे., चैष] विवर्धते ।
किमात्मकः किमाचारस्तन्म[पा. भे.,स्तत् स]माचक्ष्व पृच्छतः ॥'

३. ३७ – [ *२ ] '[ श्रीभगवानुवाच । ]

एष सूक्ष्मः परः शत्रु-
र्देहिनामिन्द्रियैः सह [पा. भे., °मिन्द्रियेषु ह] ।
सुखतन्त्र [पा. भे., सुखं तत्र] इवासीनो [पा. भे., इहासीनो]
मोहयन् पार्थ तिष्ठति ॥'

३. ३७ – [ *३ ] 'कामक्रोधमयो [पा. भे., कामः क्रोधमयो] घोरः
स्तम्भहर्षसमुद्भवः ।
अहंकारोऽभि[पा. भे., अहंकाराभि]मानात्मा
दुस्तरः [पा. भे., दुःसहः] पापकर्मभिः ॥'

३. ३७ – [ *४ ] 'हर्षमस्य निवर्त्यैष [पा. भे., निवर्त्यैव, निवृत्यैष]
शोक[पा. भे., मोह]मस्य ददाति च ।
भयं चास्य करोत्येष [पा. भे., करोत्येव]
मोहयंस्तु मुहुर्मुहुः ॥'

३. ३७ – [ *५ ] 'स एष कलुषः [पा. भे., कलुषी] क्षुद्र-
श्छिद्रप्रेक्षी [पा. भे., श्छिद्रान्वेषी] धनंजय ।
रजःप्रवृत्तो मोहात्मा [पा. भे., प्रवर्तितो मोहान्]
मानुषाणा[पा. भे., मनुष्याणा]मुपद्रवः ॥'

इति प्रश्नोत्तरात्मकं श्लोकपञ्चकं ३.३७ श्लोकानन्तरं, क्वचित्तु ३.३६ श्लोकानन्तरं, काश्मीरपाठेऽधिकं पठ्यते । इदं च यादवप्रकाशीयैरपि लिखितमिति तात्पर्य-चन्द्रिकायां वेदान्तदेशिकाचार्यैः ।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥
तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

---

३. ३८ – '°नाव्रियते' इतिस्थाने '°नापिहितो' इति पाठः ।
३. ३८ – 'मलेन च' इतिस्थाने 'मलेन वा' इति पाठः ।
३. ३८ – 'तेनेदमावृतम्' इतिस्थाने 'तेनायमावृतः' इति, '°ऽनेनायमावृतः' इति च काश्मीरपाठौ ।
३. ३९ – '°वैरिणा' इतिस्थाने '°वैरिणः' इति, '°वैरिणाम्' इति च पाठौ ।
३. ३९ – 'दुष्पूरेणानलेन' इतिस्थाने 'दुष्पूरणानलेन' इति पाठः ।
३. ४० – '°मोहयत्येष' इतिस्थाने '°मोहयत्येव' इति, '°मोहयत्येषु' इति च पाठौ ।
३. ४० – 'देहिनम्' इतिस्थाने 'देहिनः' इति, 'देहिनाम्' इति च पाठौ ।
३. ४१ – 'प्रजहिह्येनं' इतिस्थाने 'प्रजहि ह्येनं' इति रामानुजमाध्वादीनां पाठः । 'प्रजहीह्येनं' इति तु काश्मीरपाठः ।
३. ४१ – '°नाशनम्' इतिस्थाने '°शासनम्' इति पाठः ।
३. ४२ – 'बुद्धिर्यो बुद्धेः परतस्तु' इतिस्थाने 'बुद्धिर्बुद्धेर्यः परतस्तु' इति पाठः ।
३. ४३ – 'बुद्ध्वा' इतिस्थाने 'मत्वा' इति पाठः ।
३. ४३ – 'संस्तभ्यात्मानमात्मना' इतिस्थाने 'संस्तभ्यात्मानमात्मनः' इति, 'संयम्यात्मानमात्मना' इति च पाठौ ।
३. ४३ – 'शत्रुं' इतिस्थाने 'शत्रून्' इति पाठः ।
३. पुष्पिकायाम् – 'कर्मयोगो' इतिस्थाने 'ज्ञानयोगो' इति, 'ब्रह्मयोगो' इति, 'कर्मब्रह्मयोगो' इति, 'कर्मप्रतिष्ठायोगो' इति, 'कर्मसंन्यासयोगो' इति च पाठान्तराणि ।

# अथ चतुर्थोऽध्यायः ।

श्रीभगवानुवाच ।

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

अर्जुन उवाच ।

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

---

४. १ – 'इमं' इतिस्थाने 'एवं' इति प्रायः काश्मीरपाठः । 'इदं' इति क्वचित् ।
४. १ – 'विवस्वते' इतिस्थाने 'विवस्वतो' इति, 'वैवस्वतं' इति च पाठौ ।
४. १ – '°रिक्ष्वाकवे' इतिस्थाने '°रिक्ष्वाकवो' इति प्रामादिकः पाठः ।
४. २ – 'परंपराप्राप्त°' इतिस्थाने 'परंपराख्यात°' इति प्रायः काश्मीरपाठः । 'परस्पराप्राप्त°' इत्यपि क्वचिदुपलभ्यते । 'परंपराप्राप्ता°' इति तु प्रामादिकः ।
४. २ – '°मिमं' इतिस्थाने '°मिदं' इति पाठः ।
४. २ – 'विदुः' इतिस्थाने केचित् 'अविदुः' इति पदच्छेदं कुर्वन्ति ।
४. २ – 'कालेनेह' इतिस्थाने 'कालेनैव' इति, 'कालेन ह' इति, 'कालेन तु' इति च पाठाः ।
४. २ – 'परंतप' इतिस्थाने 'परंतपः' इति पाठः ।
४. ३ – 'स एवायं' इतिस्थाने 'स एव च' इति भास्करपाठः ।
४. ३ – 'पुरातनः' इतिस्थाने 'सनातनः' इति क्वचित् काश्मीरपाठः ।
४. ३ – 'भक्तोऽसि' इतिस्थाने 'भक्तोऽति' इति पाठः ।
४. ३ – 'चेति' इतिस्थाने 'चासि' इति पाठः ।
४. ३ – 'ह्येतदु°' इतिस्थाने 'चैतदु°' इति पाठः । 'एतदु°' इति प्रायः काश्मीरपाठः ।
४. ४ – 'अपरं' इतिस्थाने 'अवरं' इति पाठः ।
४. ४ – 'अपरं भवतो' इतिस्थाने '°आद्यं भगवतो' इति पाठः ।
४. ४ – '°मेतद्वि°' इतिस्थाने '°मेवं वि°' इति, '°मेनं वि°' इति च पाठौ ।
४. ४ – 'प्रोक्तवानिति' इतिस्थाने 'प्रोक्तवानसि' इति पाठः ।

श्रीभगवानुवाच ।

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

---

४. ५ – 'तव चा°' इतिस्थाने 'च तवा°' इति पाठः ।
४. ५ – 'वेद' इतिस्थाने 'वेद्मि' इति पाठः ।
४. ५ – 'वेत्थ' इतिस्थाने 'वेत्सि' इति पाठः ।
४. ५ – 'तान्यहं वेद सर्वाणि न त्वं वेत्थ' इतिस्थाने 'न तानि वेद्मि सर्वाणि न त्वं वेत्सि' इति यवद्वीपपाठः ।
४. ६ – 'संभवाम्यात्म°' इतिस्थाने 'संभवायात्म°' इति क्वचित् पाठः ।
४. ७ – 'धर्मस्य' इतिस्थाने 'धर्माख्या' इति पाठः ।
४. ७ – 'तदात्मानं' इतिस्थाने 'तदात्मांशं' इति प्रायः काश्मीरटीकासु पाठः ।
४. ८ – 'साधूनां' इतिस्थाने 'साध्यानां' इति पाठः ।
४. ८ – 'च दुष्कृताम्' इतिस्थाने 'दुरात्मनाम्' इति यवद्वीपपाठः ।
४. ९ – 'मे दिव्यं' इतिस्थाने 'दिव्यं मे' इति पाठः ।
४. ९ – 'नैति' इतिस्थाने 'नेति' इति पाठः ।
४. ९ – 'सोऽर्जुन' इतिस्थाने 'पाण्डव' इति पाठः ।
४. १० – 'मामुपाश्रिताः' इतिस्थाने 'मद्व्यपाश्रयाः' इति प्रायः काश्मीरपाठः । 'मामपाश्रिताः' इति क्वचिदन्यत्र ।
४. १० – 'मद्भावमागताः' इतिस्थाने 'मद्भावमाश्रिताः' इति, 'मद्भावनागताः' इति च पाठौ ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत् ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥

---

४. १२ – 'काङ्क्षन्तः' इतिस्थाने 'काङ्क्षतः' इति प्रामादिकः पाठः ।
४. १२ – 'कर्मणां' इतिस्थाने 'कर्मणः' इति, 'कर्मणा' इति, 'परमां' इति च पाठाः ।
४. १२ – 'इह' इतिस्थाने 'इति' इति पाठः ।
४. १३ – 'चातुर्वर्ण्यं मया सृष्टं' इतिस्थाने 'चतुर्वर्णा मया सृष्टा' इति पाठः ।
४. १३ – '°विभागशः' इतिस्थाने '°विभागतः' इति प्रायः काश्मीरपाठः ।
४. १३ – 'तस्य' इतिस्थाने 'कस्य' इति पाठः ।
४. १४ – 'कर्माणि' इतिस्थाने 'कर्मणि' इति पाठः ।
४. १४ – 'कर्मफले स्पृहा' इतिस्थाने 'कामः फलेष्वपि' इति प्रायः काश्मीरपाठः । 'कर्मफलस्पृहा' इत्यन्यत्र क्वचिदुपलभ्यते ।
४. १४ – '°योऽभि°' इतिस्थाने 'यो वि°' इति पाठः ।
४. १४ – 'बध्यते' इतिस्थाने 'बाध्यते' इति पाठः । 'पद्यते' इत्यपि क्वचित् ।
४. १५ – 'पूर्वैरपि' इतिस्थाने 'सर्वैरपि' इति पाठः ।
४. १५ – 'कर्मैव' इतिस्थाने 'कर्मेव' इति पाठः, प्रायः प्रामादिकः ।
४. १५ – 'पूर्वैः पूर्वतरं' इतिस्थाने 'पूर्वं पूर्वतरैः' इति, 'पूर्वैः पूर्वतरैः' इति च पाठौ ।
४. १६ – 'प्रवक्ष्यामि' इतिस्थाने 'प्रवक्षामि' इति प्रामादिकः पाठः ।
४. १६ – 'मोक्ष्यसे' इतिस्थाने 'मोक्षसे' इति प्रामादिकः पाठः ।
४. १६ – '°ऽशुभात्' इतिस्थाने '°ऽश्रमात्' इति पाठः ।

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित् करोति सः ॥ २० ॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

---

४. १७ – 'ह्यपि' इतिस्थाने '°ऽपि हि' इति क्वचित् काश्मीरपाठः । 'ह्यवि°' इति तु प्रामादिकः ।

४. १७ – 'अकर्मणश्च' इतिस्थाने 'अकर्मणस्तु' इति, 'अकर्मणोऽपि' इति च पाठौ ।

४. १७ – 'गहना कर्मणो' इतिस्थाने 'कर्मणो गहना' इति पाठः ।

४. १८ – 'पश्येदकर्मणि' इतिस्थाने 'पश्यत्यकर्मणि' इति प्रायः काश्मीरपाठः, यवद्वीपपाठश्च ।

४. १८ – 'मनुष्येषु' इतिस्थाने 'मनुष्याणां' इति यवद्वीपपाठः ।

४. १८ – 'स युक्तः' इतिस्थाने 'स चोक्तः' इति प्रायः काश्मीरपाठः । 'संयुक्तः' इत्यन्यत्र दृश्यते ।

४. १८ – 'कृत्स्नकर्मकृत्' इतिस्थाने 'सर्वकर्मकृत्' इति, 'कृत्स्नकर्मसुत्' इति च पाठौ । 'कृत्स्नकर्मवित्' इति तु यवद्वीपपाठः ।

४. १९ – 'यस्य' इतिस्थाने 'पश्य' इतिः प्रामादिकः पाठः ।

४. २० – 'निराश्रयः' इतिस्थाने 'निराशयः' इति, 'निरामयः' इति च पाठौ ।

४. २० – 'कर्मण्यभि°' इतिस्थाने 'कर्मण्यपि' इति, 'कर्मभिः सं°' इति च पाठौ ।

४. २० – 'सः' इतिस्थाने 'मे' इति पाठः ।

४. २१ – 'शारीरं' इतिस्थाने 'शरीरं' इति प्रायः प्रामादिकः पाठः ।

४. २२ – 'सिद्धावसिद्धौ' इतिस्थाने 'सिद्धाविसिद्धौ' इति प्रामादिकः पाठः ।

४. २२ – 'निबध्यते' इतिस्थाने 'निबाध्यते' इति, 'स बध्यते' इति च पाठौ ।

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

---

४. २३ – 'मुक्तस्य' इतिस्थाने 'युक्तस्य' इति पाठो नेपालमातृकायां प्रान्ते लिखितो दृश्यते ।

४. २३ – 'यज्ञायाचरतः' इतिस्थाने 'यज्ञायारभतः' इति प्रायः काश्मीरपाठः । 'ज्ञानायारभतः' इत्यपि क्वचन दृश्यते ।

४. २४ – 'ब्रह्मैव तेन' इतिस्थाने 'ब्रह्म तेनैव' इति पाठः ।

४. २४ – 'ब्रह्मकर्मसमाधिना' इति समस्तपदस्थाने 'ब्रह्म कर्म समाधिना' इति पृथक् पदत्रयं नीलकण्ठादिटीकायामङ्गीकृतम्, तथा 'ब्रह्म कर्मसमाधिना' इति पदद्वयं मधुसूदनादिटीकायाम् ।

४. २५ – 'पर्युपासते' इतिस्थाने 'समुपासते' इति बहुशः काश्मीरपाठः ।

४. २५ – '°वोपजुह्वति' इतिस्थाने '°वावजुह्वति' इति पाठः ।

४. २६ – '°ण्यन्ये' इतिस्थाने '°ण्येत्य' इति पाठः ।

४. २७ – 'प्राणकर्माणि' इतिस्थाने 'प्राणकर्मापि' इति, 'ज्ञानकर्माणि' इति च पाठौ ।

४. २८ – 'योगयज्ञा°' इतिस्थाने 'ज्ञानयज्ञा°' इति पाठः ।

४. २८ – 'यतयः' इतिस्थाने 'मुनयः' इति पाठः ।

४. २८ – 'संशित°' इतिस्थाने 'शंसित°' इति पाठः ।

४. २९ – 'प्राणेऽपानं' इतिस्थाने 'प्राणापानं' इति पाठः ।

४. २९ – '°गती' इतिस्थाने '°मती' इति पाठः । '°गति' इति तु प्रामादिकः ।

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥

---

४. ३० – 'प्राणेषु' इतिस्थाने 'पानेषु' इति पाठः ।
४. ३० – '°क्षपित°' इतिस्थाने '°क्षयित°' इति पाठः ।
४. ३० – '°कल्मषाः' इतिस्थाने '°किल्बिषाः' इति पाठः ।
४. ३१ – '°शिष्टा°' इतिस्थाने '°सृष्टा°' इति पाठः ।
४. ३१ – 'यान्ति' इतिस्थाने 'याति' इति प्रामादिकः पाठः ।
४. ३१ – 'लोकोऽस्त्ययज्ञस्य' इतिस्थाने 'लोकोऽस्य यज्ञस्य' इति 'लोकोऽस्ति यज्ञस्य' इति च पाठौ ।
४. ३२ – 'मुखे' इतिस्थाने 'मखे' इति पाठः ।
४. ३२ – '°नेवं ज्ञा°' इतिस्थाने '°नेतज्ज्ञा°' इति, '°नेनं ज्ञा°' इति च पाठौ ।
४. ३२ – 'विमोक्ष्यसे' इतिस्थाने 'विमोक्षसे' इति प्रामादिकः पाठः ।
४. ३३ – 'द्रव्य°' इतिस्थाने 'ब्रह्म°' इति पाठः ।
४. ३३ – 'सर्वं कर्माखिलं पार्थ' इतिस्थाने 'सर्वंकर्माखिलं कर्म' इति यवद्वीपपाठः । 'सर्वंकर्माखिलं पार्थ' इति त्वन्यत्र क्वचित् ।
४. ३३ – 'ज्ञाने परिसमाप्यते' इतिस्थाने 'पार्थ ज्ञाने समाप्यते' इति यवद्वीपपाठः ।
४. ३४ – 'सेवया' इतिस्थाने 'मेधया' इति यवद्वीपपाठः ।
४. ३४ – '°देक्ष्यन्ति' इतिस्थाने '°देक्षन्ति' इति प्रामादिकः पाठः ।
४. ३५ – अयं श्लोकः आनन्दवर्धनेन न पठितः, स्वटीकायां न व्याख्यातश्च ।
४. ३५ – '°र्मोहमेवं' इतिस्थाने '°र्मोहादेवं' इति पाठः ।
४. ३५ – '°न्यशेषेण' इतिस्थाने '°न्यशेषाणि' इति क्वचित् काश्मीरपाठः ।
४. ३५ – 'द्रक्ष्यस्या°' इतिस्थाने 'द्रक्षस्या°' इति प्रामादिकः पाठः ।
४. ३५ – '°न्यथो' इतिस्थाने '°न्यथ' इति, '°न्यधो' इति च पाठौ ।

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥ ३७ ॥

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

---

४. ३६ – 'चेदसि' इतिस्थाने 'चेदस्ति' इति पाठः ।

४. ३६ – 'पापेभ्यः' इतिस्थाने पापिभ्यः' इति पाठः ।

४. ३६ – 'सर्वं' इतिस्थाने 'सर्वं°' इति पाठः ।

४. ३६ – 'संतरिष्यसि' इतिस्थाने 'संतरिष्यति' इति पाठः ।

४. ३७ – 'भस्मसात् कुरुते' इतिस्थाने 'भस्मसात् क्रियते' इति प्रमादपाठः ।

४. ३७ – 'कुरुतेऽर्जुन' इतिस्थाने 'कुरुते तथा' इति क्वचित् काश्मीरपाठः । 'क्रियतेऽर्जुन' इति तु प्रामादिकः ।

४. ३७ – 'कुरुते तथा' इतिस्थाने 'कुरुतेऽर्जुन' इति क्वचित् काश्मीरपाठः । 'कुरुते तदा' इत्यन्यत्र । 'कुरुते यथा' इति तु प्रामादिको नेपालपाठः ।

४. ३८ – 'ज्ञानेन' इतिस्थाने 'सज्ज्ञान°' इति पाठः ।

४. ३८ – '°संसिद्धः' इतिस्थाने '°संसिद्धं' इति, '°संसिद्धिः' इति च क्वचित् पाठौ ।

४. ३८ – 'विन्दति' इतिस्थाने 'विन्दते' इति पाठः ।

४. ३९ – 'लभते' इतिस्थाने 'भजते' इति पाठः ।

४. ३९ – 'तत्परः' इतिस्थाने 'मत्परः' इति क्वचित् पाठः ।

४. ३९ – 'संयते°' इतिस्थाने 'संजिते°' इति पाठः ।

४. ३९ – 'परां' इतिस्थाने 'परे' इति, 'परं' इति च पाठौ ।

४. ४० – 'अज्ञ°' इतिस्थाने 'यज्ञ°' इति प्रामादिकः पाठः ।

४. ४० – 'लोको' इतिस्थाने 'लोके' इति पाठः ।

४. ४० – 'न परो' इतिस्थाने 'न परे' इति पाठः ।

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ब्रह्मयज्ञप्रशंसा नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

४. ४१ – '°संशयम्' इतिस्थाने '°संशयः' इति प्रामादिकः पाठः ।
४. ४२—'हृत्स्थं' इतिस्थाने 'कृत्स्नं' इति, 'कृष्णं' इति च पाठौ ।
४. ४२ – 'ज्ञानासिनात्मनः' इतिस्थाने 'ज्ञानासिनात्मना' इति पाठः ।
४. ४२ – 'छित्त्वैनं' इतिस्थाने 'छित्त्वैवं' इति क्वचित् काश्मीरपाठः ।
४. पुष्पिकायाम् – 'ब्रह्मयज्ञप्रशंसा' इतिस्थाने 'ज्ञानकर्मसंन्यासयोगो' इति, 'संन्यासयोगो' इति, 'संध्यासं(?)योगो' इति, 'कर्मसंन्यासयोगो' इति, 'ज्ञानयोगो' इति, 'कर्मयोगो' इति, 'ज्ञानसंयमयोगो' इति, 'ज्ञानसंशय(?)योगो' इति, 'मनःसंयोगो' इति, 'ज्ञानकर्मसंन्यासविविधयज्ञविभागो' इति, 'यज्ञविभागयोगो' इति, 'यज्ञयोगो' इति, 'यज्ञप्रशंसायोगो' इति, 'ब्रह्मार्पणयोगो' इति, विवस्वद्योगो' इति, 'विवस्वज्ज्ञानयोगो' इति च पाठान्तराणि ।

# अथ पञ्चमोऽध्यायः ।

अर्जुन उवाच ।

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

श्रीभगवानुवाच ।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात् प्रमुच्यते ॥ ३ ॥

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

---

५. १ – 'कर्मणां' इतिस्थाने 'करणां' इति, 'कर्मणा' इति च पाठौ ।

५. १ – 'यच्छ्रेय एतयोरेकं त°' इतिस्थाने 'यः श्रेयानेतयोरेकस्तं' इति पाठः । तथा 'यच्छ्रेयानेतयोरेकस्त°' इत्यपि प्रामादिकः ।

५. १ – 'तन्मे ब्रूहि', इतिस्थाने 'ब्रूहि तन्मे' इति, 'तन्मे वद' इति च पाठौ ।

५. १ – 'सुनिश्चितम्' इतिस्थाने 'विनिश्चितम्' इति प्रायः काश्मीरपाठः ।

५. २ – 'विशिष्यते' इतिस्थाने 'विशांपते' इति प्रामादिकः पाठः ।

५. ३ – 'नित्यसंन्यासी' इतिस्थाने 'एव संन्यासी' इति पाठः ।

५. ३ – 'निर्द्वन्द्वो' इतिस्थाने 'निर्बंद्धो' इति पाठः । तथा 'निर्बंद्धो' इत्यपि क्वचित् ।

५. ३ – 'सुखं' इतिस्थाने 'सुख°' इति पाठः ।

५. ३ – 'प्रमुच्यते' इतिस्थाने 'विमुच्यते' इति प्रायः काश्मीरपाठः ।

५. ४ – '°प्यास्थितः' इतिस्थाने '°प्याश्रितः' इति पाठः ।

५. ४ – '°गुभयोर्विन्दते फलम्' इतिस्थाने '°गुभयोः फलमश्नुते' इति पाठः ।

५. ५ – 'स्थानं' इतिस्थाने 'ज्ञानं' इति पाठः ।

५. ५ – '°रपि गम्यते' इतिस्थाने '°रनुगम्यते' इति प्रायः काश्मीरपाठः । '°रधिगम्यते' इति, '°रनुगीयते' इति चापरौ पाठौ । अयं श्लोकः कासुचिन्मातृकासु न विद्यते । न चानन्दवर्धनेन व्याख्यातः ।

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपञ्श्वसन् ॥ ८ ॥

प्रलपन् विसृजन् गृह्णन्नुन्मिषन् निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११ ॥

---

५. ६ – 'ब्रह्म' इतिस्थाने 'ब्रह्मन्' इति प्रामादिकः पाठः ।

५. ६ – 'नचिरेणाधि°' इतिस्थाने, 'अचिरेणाधि°' इति, '°ऽचिरेणाधि°' इति च पाठौ।

५. ७ – 'विजितात्मा' इतिस्थाने 'संयतात्मा' इति पाठः ।

५. ७ – 'कुर्वन्नपि' इतिस्थाने 'कुर्वाणोऽपि' इति पाठः । 'कुर्वन् वापि' इति च भास्करपाठः ।

५. ८ – 'नैव' इतिस्थाने 'न वै' इति पाठः । अयं श्लोकार्धः यवद्वीपपाठे नवमश्लोकोत्तरार्धस्य पूर्वं दृश्यते ।

५. ८ – 'किंचित् करोमीति' इतिस्थाने 'तत् किं करोमीति' इति पाठः ।

५. ८ – 'अश्नन् गच्छन् स्वपञ्श्वसन्' इतिस्थाने 'अश्नन् गच्छञ्श्वसन् स्वपन्' इति बह्वीषु काश्मीरमातृकासु पाठः ।'भुञ्जन् गच्छञ्श्वसन् स्मयन्' इति भास्करपाठः। 'अश्नन् गच्छञ्श्वसञ्जपन्' इत्यपि क्वचित् ।

५. ९ – 'विसृजन्' इतिस्थाने 'विलपन्' इति पाठः ।

५. १० – 'ब्रह्मण्याधाय' इतिस्थाने 'ब्रह्मण्यादाय' इति, 'ब्रह्मणादाय' इति च पाठौ ।

५. १० – 'पापेन' इतिस्थाने 'पापेभ्यः' इति पाठः ।

५. १० – '°मिवाम्भसा' इतिस्थाने '°मिवाम्भसि' इति पाठः ।

५. १० – 'लिप्यते न स पापेन' इतिस्थाने 'न स लिप्यति दोषेण' इति यवद्वीपपाठः ।

५. ११ – 'बुद्ध्या' इतिस्थाने 'वाचा' इति क्वचित् पाठः ।

५. ११ – '°शुद्धये' इतिस्थाने '°सिद्धये' इति प्रायः काश्मीरपाठः ।

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन् ॥ १३ ॥
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥
नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत् परम् ॥ १६ ॥
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

---

५. १२ – 'कामकारेण' इतिस्थाने 'कामचारेण' इति, 'कर्मकारेण' इति च पाठौ ।
५. १२ – 'निबध्यते' इतिस्थाने 'निबाध्यते' इति पाठः ।
५. १३ – 'देही नैव' इतिस्थाने 'देहे नैव' इति, 'देहेनैव' इति, 'गेहे नैव' इति च पाठाः ।
५. १३ – 'कारयन्' इतिस्थाने 'कारयेत्' इति पाठः ।
५. १४ – 'न कर्तृत्वं न कर्माणि' इतिस्थाने 'नाकर्तृत्वं न कर्तृत्वं' इति पाठः । 'स कर्तृत्वं न कर्माणि' इत्यपि क्वचित् ।
५. १४ – 'प्रभुः' इतिस्थाने 'विभुः' इति पाठः ।
५. १४ – 'न कर्मफल°' इतिस्थाने 'स कर्मफल°' इति पाठः ।
५. १४ – '°संयोगं' इतिस्थाने '°संयोगः' इति पाठः ।
५. १५ – 'चैव' इतिस्थाने 'चैवं' इति पाठः ।
५. १५ – 'सुकृतं' इतिस्थाने 'सुकृतिं' इति पाठः ।
५. १५ – 'विभुः' इतिस्थाने 'प्रभुः' इति पाठः ।
५. १६ – 'तदज्ञानं' इतिस्थाने 'तदाज्ञानं' इति पाठः ।
५. १६ – 'येषां' इतिस्थाने 'एषां' इति पाठः ।
५. १६ – 'नाशित°' इतिस्थाने 'नाशितु°' इति पाठः ।
५. १६ – 'प्रकाशयति' इतिस्थाने 'प्रकाश इति' इति पाठः ।
५. १७ – '°निर्धूत°' इतिस्थाने '°निर्धौत°' इति प्रायः काश्मीरपाठः ।
५. १७[*१] – 'स्मरन्तोऽपि मुहुस्त्वेतत् (पा. भे., स्त्वेवं) स्पृशन्तोऽपि स्वकर्मणि ।
सक्ता अपि न सज्जन्ति पङ्के रविकरा इव ॥'
इत्यधिकः श्लोको द्वित्रासु काश्मीरमातृकासु । स प्रायोऽभिनवगुप्तटीकाया उद्धृतः, न मूले भवितुमर्हति ।

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥

न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ २१ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

---

५. १८ – 'श्वपाके च' इतिस्थाने 'श्वपाकेन' इति, तथा 'स्वपाकेन' इति च पाठौ ।

५. १९ – अयं श्लोकः काश्मीरपाठे प्रायः नात्र पठितः, किं तु षष्ठाध्यायस्थनवमश्लोकानन्तरं पठितः ।

५. १९ – 'तैर्जितः' इतिस्थाने 'निर्जितः' इति पाठः ।

५. १९ – 'सर्गो' इतिस्थाने 'स्वर्गो' इति पाठः ।

५. १९ – 'येषां' इतिस्थाने 'एषां' इति पाठः ।

५, १९ – 'साम्ये' इतिस्थाने 'स्वाम्ये' इति पाठः । 'सांख्ये' इत्यपि क्वचिदुपलभ्यते ।

५. २० – 'नोद्विजेत् प्राप्य चाप्रियम्' इतिस्थाने 'नाप्रियं प्राप्य चोद्विजेत्' इति, 'नोद्विजेत् प्राप्य विप्रियम्' इति, 'नो द्वेष्टि प्राप्य चाप्रियम्' इति च पाठाः ।

५. २० – 'स्थितः' इतिस्थाने 'स्थितिः' इति, 'स्थिताः' इति च पाठौ ।

५. २१ – अयं श्लोको भास्करेण न पठितः ।

५. २१ – 'बाह्य°' इतिस्थाने 'बाहु°' इति प्रामादिकः पाठः ।

५. २१ – 'यत् सुखम्' इतिस्थाने 'यः सुखम्' इति प्रायः काश्मीरपाठः ।

५. २१ – '°योग°' इतिस्थाने '°लोक°' इति क्वचित् पाठः ।

५. २१ – '°मक्षय°' इतिस्थाने '°मक्षय्य°' इति पाठः । काश्मीरमातृकासु तु '°मव्यय°' इति पाठः ।

५. २२ – 'ये हि' इतिस्थाने 'ये च' इति पाठः ।

५. २२ – 'संस्पर्शजा' इतिस्थाने 'संसर्गजा' इति पाठः । 'संस्पर्शजान्' इति तु प्रामादिकः ।

५. २२ – 'भोगा' इतिस्थाने 'भावा' इति पाठः ।

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥

---

५. २३ – 'शक्नोतीहैव' इतिस्थाने 'शक्नोति हैव' इति पाठः ।

५. २३ – '°विमोक्षणात्' इतिस्थाने '°विमोचनात्' इति प्रायः काश्मीरपाठः ।

५. २३ – 'कामक्रोधोद्भवं वेगं' इतिस्थाने 'कामोत्थवेगानुरोधः' इति भास्करपाठः, प्रायः प्रामादिकः ।

५. २३ – 'स युक्तः स सुखी नरः' इतिस्थाने 'स योगी स सुखी मतः' इति, 'स योगी सुसुखी नरः' इति, 'स योगी स सुखी नरः' इति, 'संयुक्तः स सुखी नरः' इति, 'स योगी परमो मतः' इति च पाठभेदाः ।

५. २४ – 'योऽन्तःसुखो' इतिस्थाने 'अन्तःसुखो' इति, प्रायः काश्मीरपाठः । 'योऽतःसुखो' इत्यपि क्वचित् ।

५. २४ – 'योगी ब्रह्मनिर्वाणं' इतिस्थाने 'पार्थ परमं योगं' इति प्रायः काश्मीरपाठः ।

५. २५ – '°कल्मषाः' इतिस्थाने '°किल्बिषाः' इति पाठः ।

५. २५ – 'छिन्नद्वैधा यतात्मानः' इतिस्थाने 'छिन्नद्वैता महात्मानः' इति, 'छिन्नद्वैता यतात्मानः' इति, 'छिन्नद्वैधा जितात्मानः' इति च पाठाः ।

५. २६ – '°वियुक्तानां' इतिस्थाने '°विमुक्तानां' इति प्रायः काश्मीरपाठः ।

५. २६ – '°यत°' इतिस्थाने '°जित°' इति पाठः ।

५. २६ – 'अभितो' इतिस्थाने 'सर्वतो' इति, 'यततो' इति च पाठौ ।

५. २६ – 'विदितात्मनाम्' इतिस्थाने 'विजितात्मनाम्' इति रामानुजीयः पाठः । 'विदितात्मनाम्' इत्यपि क्वचित् ।

५. २७ – '°बाह्यांश्च°' इतिस्थाने '°बाह्याश्च°' इति पाठः ।

५. २७ – 'नासाभ्यन्तर°' इतिस्थाने 'नासाभ्यान्तर°' इति पाठः ।

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
संन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

५. २८ – 'यतेन्द्रिय°' इतिस्थाने 'जितेन्द्रिय°' इति पाठः ।
५. २८ – '°भयक्रोधो' इतिस्थाने '°भयद्वेषो' इति पाठः ।
५. २८ – 'मुक्त' इतिस्थाने 'युक्त' इति पाठः ।
५. २९ – 'सर्वलोक°' इतिस्थाने 'सर्वभूत°' इति पाठः ।
५. २९ – '°महेश्वरम्' इतिस्थाने '°महेश्वरः' इति पाठः ।
५. २९ – 'मां' इतिस्थाने 'मा' इति भास्करपाठः ।
५. २९ – '°मृच्छति' इतिस्थाने '°मिच्छति' इति पाठः ।
५. पुष्पिकायाम् – 'संन्यासयोगो' इतिस्थाने 'कर्मसंन्यासयोगो' इति, 'कर्मयोगो' इति, 'सांख्ययोगो' इति, 'सांख्ययोगकथनं' इति, 'ज्ञानयोगो' इति, 'भक्तियोगो' इति, 'योगसमुच्चयो' इति, 'आत्मसंयमयोगो' इति, 'योगगर्भो' इति, 'प्रकृतिगर्भो' इति च पाठान्तराणि ।

## अथ षष्ठोऽध्यायः ।

श्रीभगवानुवाच ।

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

---

६. १ – 'करोति यः' इतिस्थाने 'करोति च' इति, 'करोति सः' इति च पाठौ ।

६. १ – 'च योगी' इतिस्थाने 'स योगी' इति भास्करपाठः । अन्यत्रापि दृश्यते ।

६. १ – 'चाक्रियः' इतिस्थाने 'निष्क्रियः' इति पाठः ।

६. २ – 'संन्यासमिति' इतिस्थाने 'संन्यास इति' इति पाठः ।

६. २ – 'ह्यसंन्यस्त°' इतिस्थाने 'ह्यसंनद्ध°' इति पाठः ।

६. २ – 'योगी भवति कश्चन' इतिस्थाने 'योगो भवति दुःखहा' इति सप्तदशश्लोकानुकारी पाठः ।

६. ३ – श्लोकस्यास्य द्वितीयतृतीयपादयोः स्थाने पञ्चमाध्यायस्यैकविंशश्लोकस्य द्वितीयतृतीयपादौ क्वचित् प्रमादात् पठितौ ।

६. ३ – 'योगारूढस्य' इतिस्थाने 'आरूढस्य तु' इति आनन्दवर्धनपाठः ।

६. ३ – 'शमः कारण°' इतिस्थाने 'शमः करण°' इति पाठः । 'समकारण°' इत्यपि क्वचित् ।

६. ४ – 'न कर्मस्वनु°' इतिस्थाने 'सर्वकर्मसु' इति पाठः ।

६. ४ – '°षज्जते' इतिस्थाने '°षजति' इति, '°षज्यते' इति, '°रज्यते' इति च पाठाः ।

६. ४ – 'तदोच्यते' इतिस्थाने 'तदुच्यते' इति, 'स उच्यते' इति च पाठौ । 'ततोच्यते' इति तु प्रामादिकः ।

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥
बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

---

६. ५ – '°त्मानं नात्मान°' इतिस्थाने '°त्मानमात्मान°' इति पाठः ।
६. ५ – '°मवसादयेत्' इतिस्थाने '°मवसादयन्' इति, '°मवसाधयेत्' इति च पाठौ ।
६. ५ – 'ह्यात्मनो' इतिस्थाने 'ह्यात्मना' इति पाठः ।
६. ५ – 'बन्धुरात्मैव' इतिस्थाने 'बुद्धिरात्मैव' इति क्वचित् पाठः । 'बन्ध आत्मैव' इति तु यवद्वीपपाठः ।
६. ६ – 'येनात्मैवात्मना' इतिस्थाने 'येनैवात्मात्मना' इति पाठः ।
६. ६ – 'अनात्मनस्तु' इतिस्थाने 'अजितात्मनस्तु' इति पाठः ।
६. ६ – 'शत्रुवत्' इतिस्थाने 'शत्रुजित्' इति पाठः ।
६. ७ – 'जितात्मनः' इतिस्थाने 'जितात्मानः' इति प्रामादिकः पाठः ।
६. ७ – 'परमात्मा समाहितः' इतिस्थाने 'परमात्मसमा मतिः' इति पाठः । 'परात्मसु समा मतिः' इति प्रायः काश्मीरपाठः । स तु भास्करेण प्रकल्पित इति प्रमेयदीपिकायां जयतीर्थः ।
६. ७ – 'मानापमानयोः' इतिस्थाने 'मानावमानयोः' इति काश्मीरपाठः । अन्यत्रापि बहुशो दृश्यते ।
६. ८ – 'विजितेन्द्रियः' इतिस्थाने '°ऽपि जितेन्द्रियः' इति पाठः ।
६. ९ – 'सुहृन्मित्रार्युदासीन°' इतिस्थाने 'सुहृन्मित्राबुदासीन°' इति, 'सुहृन्मित्रात्युदासीन°' इति, 'सुहृन्मित्रार्युदासीनो' इति च पाठाः ।
६. ९ – '°मध्यस्थ°' इतिस्थाने 'मध्यस्थौ' इति पाठः ।
६. ९ – 'साधुष्वपि' इतिस्थाने 'साधुष्वथ' इति पाठः ।
६. ९ – 'समबुद्धि°' इतिस्थाने 'समदृष्टि°' इति पाठः ।
६. ९ – '°र्विशिष्यते' इतिस्थाने '°र्विमुच्यते' इति शाङ्करभाष्ये निर्दिष्टः पाठभेदः ।
६. ९ – एतच्छ्लोकानन्तरं 'इहैव तैर्जितः' इत्यादिकः पञ्चमाध्यायस्थः एकोनविंशः श्लोकः कैश्चित् काश्मीरपुस्तकैस्तत्र विहायात्र पठ्यते, द्विवारं पठ्यते वा ।

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

---

६. १० – 'योगी' इतिस्थाने 'ध्यायी' इति पाठः ।

६. १० – 'सततमात्मानं' इतिस्थाने 'सतत आत्मानं' इति पाठः ।

६. १० – 'एकाकी यतचित्ता°' इतिस्थाने 'एकाकीर्यतचित्ता°' इति, 'निराशीर्यतचित्ता°' इति, 'एकाकी जितचित्ता°' इति, 'एकाकी यतिचित्ता° इति च पाठाः ।

६. १० – 'निराशीरपरिग्रहः' इतिस्थाने 'निराशीर्ह्यपरिग्रहः' इति, 'चैकाकी निष्परिग्रहः' इति च पाठौ ।

६. ११ – '°मासन°' इतिस्थाने '°मानस°' इति पाठः ।

६. ११ – 'नात्युच्छ्रितं' इतिस्थाने 'नात्युच्छ्रिते' इति पाठः ।

६. ११ – 'चैलाजिन°' इतिस्थाने 'चेलाजिन°' इति पाठः ।

६. १२ – 'तत्रैकाग्रं' इतिस्थाने 'तत्रैवाग्रं' इति पाठः ।

६. १२ – 'यतचित्तेन्द्रिय°' इतिस्थाने 'जितचित्तेन्द्रिय°' इति पाठः । 'यतचित्तेन्द्रियः' इत्यपि क्वचित् । 'यतचित्तेन्द्रियक्रियाः' इति तु प्रामादिकः ।

६. १२ – 'युञ्ज्याद्योग°' इतिस्थाने 'युज्याद्योग°' इति, 'युञ्ज्यद्योग°' इति च पाठौ ।

६. १२ – '°मात्मविशुद्धये' इतिस्थाने '°मात्मनि शुद्धये' इति पाठः ।

६. १३ – 'समं काय°' इतिस्थाने 'समकाय°' इति, 'समः काय°' इति च पाठौ ।

६. १३ – 'धारयन्नचलं स्थिरः' इतिस्थाने 'धारयेदचलं मनः' इति यवद्वीपपाठः । 'धारयन्नचलः स्थितः' इति प्रायः काश्मीरपाठः ।

६. १३ – '°न्नचलं स्थिरः' इतिस्थाने '°न्नचलः स्थितः' इति प्रायः काश्मीरपाठः, '°न्नचलं स्थिरम्' इत्यपि क्वचित् पाठः । तथा '°न्नचलं मनः' इति, '°न्नचलं स्थितम्' इति, '°न्नचलस्थिरम्' इति, '°न्नचलस्थिरः' इत्यप्युपलभ्यन्ते ।

६. १३ – 'संप्रेक्ष्य' इतिस्थाने 'संपश्यन्' इति काश्मीरपाठः ।

६. १३ – 'स्वं' इतिस्थाने 'च' इति पाठः ।

६. १३ – '°लोकयन्' इतिस्थाने '°लोकयेत्' इति पाठः ।

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

---

६. १४ – 'ब्रह्मचारि°' इतिस्थाने 'ब्रह्मचारी' इति पाठः ।
६. १४ – 'स्थितः' इतिस्थाने 'स्थिरः' इति पाठः ।
६. १४ – 'मच्चितो' इतिस्थाने 'यच्चित्तो' इति पाठः ।
६. १५ – 'युञ्जन्नेवं' इतिस्थाने 'एवं युञ्जन्' इति, 'युञ्जन्नेव' इति च पाठौ ।
६. १५ – 'योगी नियतमानसः' इतिस्थाने 'मद्भक्तोऽनन्यमानसः' इति, 'मद्भक्तो नान्यमानसः' इति च प्रायः काश्मीरपाठौ ।
६. १५ – '°मधिगच्छति' इतिस्थाने '°मभिगच्छति' इति पाठः ।
६. १६ – 'नात्यश्नतस्तु योगोऽस्ति' इतिस्थाने 'योगोऽस्ति नैवात्यशतो' इति प्रायः काश्मीरपाठः ।
६. १६ – 'जाग्रतो नैव चार्जुन' इतिस्थाने 'नातिजागरतोऽर्जुन' इति, 'न च जागरतोऽर्जुन' इति प्रायः काश्मीरपाठौ ।
६. १७ – '°स्वप्नावबोधस्य' इतिस्थाने '°स्वप्नावघोरस्य' इति पाठः ।
६. १८ – '°वावतिष्ठते' इतिस्थाने '°वावतिष्ठति' इति पाठः ।
६. १८ – 'तदा' इतिस्थाने 'सदा' इति पाठः ।
६. १९ – 'यथा' इतिस्थाने 'यदा' इति पाठः ।
६. १९ – 'स्मृता' इतिस्थाने 'स्मृतः' इति प्रामादिकः पाठः ।
६. १९ – 'यतचित्तस्य' इतिस्थाने 'जितचित्तस्य' इति पाठः ।
६. १९ – 'युञ्जतो' इतिस्थाने 'युञ्जते' इति प्रामादिकः पाठः ।
६. १९ – 'योगमात्मनः' इतिस्थाने 'योगमात्मनि' इति प्रायः काश्मीरपाठः ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥

सुखमात्यन्तिकं यत् तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥

---

६. २० – '°सेवया' इतिस्थाने '°सेवनात्' इति प्रायः काश्मीरपाठः ।
६. २० – 'यत्र चैवा°' इतिस्थाने 'तत्र चैवा°' इति पाठः ।
६. २० – 'तुष्यति' इतिस्थाने 'तिष्ठति' इति, 'पश्यति' इति च पाठौ ।
६. २१ – 'यत् तद्बुद्धि°' इतिस्थाने 'यत्र बुद्धि°' इति प्रायः काश्मीरपाठः । 'यत्तु बुद्धि°' इत्यपि क्वचित् पाठः ।
६. २१ – 'स्थितश्चलति' इतिस्थाने 'स्थितश्च्यवति' इति प्रायः काश्मीरपाठः । 'स्थिरश्चलति' इत्यन्यत्र क्वचित् ।
६. २२ – 'यं लब्ध्वा चापरं लाभं' इतिस्थाने 'यं दृष्ट्वा चापरं लाभं' इति, 'यं लब्ध्वा नापरं लाभं' इति, 'यं लब्ध्वा नाधिकं लाभं' इति, 'यं लब्ध्वा चापरो लाभः' इति च पाठाः ।
६. २२ – 'नाधिकं' इतिस्थाने 'नापरं' इति, 'चापरं' इति च पाठौ ।
६. २२ – 'स्थितो' इतिस्थाने 'स्थिते' इति पाठः । 'स्तुतो' इति तु प्रामादिकः ।
६. २२ – 'विचाल्यते' इतिस्थाने 'विमुच्यते' इति, 'विचार्यते' इति च पाठौ ।
६. २३ – 'विद्याद्दुःखसंयोग°' इतिस्थाने 'विन्द्याद्दुःखसंयोग°' इति, 'विन्द्याद्दुःखसंयोगं' इति, 'विद्याद्दुःखसंयोगं' इति च पाठाः ।
६. २३ – '°संज्ञितम्' इतिस्थाने '°संस्थितम्' इति, '°संज्ञिकं' इति च पाठौ ।
६. २४ – 'सर्वानशेषतः' इतिस्थाने 'धर्मानशेषतः' इति पाठः ।
६. २५ – '°रुपरमेद्बुद्ध्या' इतिस्थाने '°रुपरमेत बुद्ध्या' इति पाठः ।
६. २५ – 'धृति°' इतिस्थाने 'रति°' इति, 'दिति°' इति च पाठौ ।

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥

---

६. २६ – 'निश्चरति' इतिस्थाने 'निश्चलति' इति, 'निःसरति' इति, 'निवर्तते' इति च पाठाः ।

६. २६ – '°श्चञ्चल°' इतिस्थाने '°श्च चल°' इति पाठः ।

६. २६ – 'नियम्यैतदा°' इतिस्थाने 'नियम्ये तदा°' इति प्रामादिकः पाठः ।

६. २६ – 'वशं' इतिस्थाने 'शमं' इत्यभिनवगुप्तपाठः ।

६. २७ – 'योगिनं सुखमुत्तमम्' इतिस्थाने 'यस्माद्योगिनमुत्तमम्' इति भास्करपाठः ।

६. २७ – 'उपैति' इतिस्थाने 'अभ्यैति' इति, 'अभ्येति' इति च पाठौ ।

६. २७ – 'शान्तरजसं' इतिस्थाने 'शान्तिरजसं°' इति, 'शान्तमनसं°' इति च पाठौ ।

६. २८ – 'युञ्जन्नेवं' इतिस्थाने 'एवं युञ्जन्' इति पाठः ।

६. २८ – 'योगी विगतकल्मषः' इतिस्थाने 'योगी नियतमानसः' इति प्रायः काश्मीरपाठः । 'मद्भक्तो नान्यमानसः' इत्यपि क्वचिदुपलभ्यते ।

६. २८ – '°संस्पर्शमत्यन्तं सुखमश्नुते' इतिस्थाने '°संयोगमत्यन्तमधिगच्छति' इति प्रायः काश्मीरपाठः । '°संस्पर्शमत्यन्तसुखमश्नुते' इत्यपि कुत्रचित् ।

६. २९ – 'ईक्षते' इतिस्थाने 'पश्यति' इति, 'पश्यते' इति, 'ईक्षेत' इति च पाठाः । 'पश्यतो' इति भास्करपाठः ।

६. २९ – '°दर्शनः' इतिस्थाने '°दर्शिनः' इति पाठः ।

६. ३० – 'सर्वं च मयि पश्यति' इतिस्थाने 'मयि पश्यति चाप्यहम्' इति पाठः ।

६. ३० – 'स च मे न प्रणश्यति' इतिस्थाने 'मा प्रणश्यति तेऽव्ययम्' इति पाठः ।

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥

अर्जुन उवाच ।

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥ ३३ ॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥

श्रीभगवानुवाच ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

---

६. ३१ – '°त्येकत्वमास्थितः' इतिस्थाने '°त्येकत्वमाश्रितः' इति, '°त्येकस्थमास्थितः' इति च पाठौ ।
६. ३१ – 'सर्वथा' इतिस्थाने 'सर्वेषां' इति पाठः ।
६. ३१ – 'स योगी मयि वर्तते' इतिस्थाने 'मय्येवासौ च वर्तते' इति भास्करपाठः । 'स योगी न निवर्तते' इति च क्वचित् ।
६. ३२ – 'योऽर्जुन' इतिस्थाने 'सोऽर्जुन' इति पाठः । 'यो जनः' इति तु यवद्वीपपाठः ।
६. ३३ – 'योगस्त्वया' इतिस्थाने 'भोगस्त्वया' इति पाठः ।
६. ३३ – 'साम्येन' इतिस्थाने 'सौम्येन' इति पाठः ।
६. ३३ – 'स्थितिं स्थिराम्' इतिस्थाने 'स्थितिं पराम्' इति पाठः । 'मनः स्थिराम्' इति तु प्रामादिकः क्वचित् ।
६. ३३ – 'स्थिराम्' इतिस्थाने 'पराम्' इति प्रायः काश्मीरपाठः ।
६. ३४ – 'प्रमाथि' इतिस्थाने 'प्रमाथी' इति प्रामादिकः पाठः ।
६. ३४ – 'बलवद्दृढम्' इतिस्थाने 'बलवत्तरम्' इति पाठः ।
६. ३४ – 'तस्याहं' इतिस्थाने 'तस्यापि' इति पाठः ।
६. ३६ – 'असंयतात्मना' इतिस्थाने 'असंयतात्मनो' इति, 'असंशयात्मना' इति च पाठौ ।
६. ३६ – 'वश्यात्मना' इतिस्थाने 'तस्यात्मना' इति, 'पश्यात्मना' इति च पाठौ ।

अर्जुन उवाच ।

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥
एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ३९ ॥

श्रीभगवानुवाच ।

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥

---

६. ३७ – 'अयतिः श्रद्धयोपेतः' इतिस्थाने 'अरतिः श्रद्धयोपेतः' इति पाठः । 'अयतः श्रद्धयोपेतः' इति तु प्रायः काश्मीरपाठः । 'अयं निःसंशयोपेतः' इति तु क्वचित् प्रामादिकः ।

६. ३७ पू [*१] – पूर्वार्धादनन्तरमधिकः श्लोकः प्रायः काश्मीरमातृकासु यथा—

'लिप्समानः सतां मार्गं
प्रमूढो ब्रह्मणः पथि ।
अनेकचित्तो विभ्रान्तो(पा. भे., चित्तविभ्रा[श्रा]न्तो, चित्तोऽविश्रान्तो)
मोहस्यैव वशं गतः' ॥

६. ३८ – '°विभ्रष्टश्छिन्नाभ्रमिव' इतिस्थाने '°विभ्रंशाच्छिन्नाभ्र इव' इति क्वचित् काश्मीरपाठः । '°विभ्रष्टं छिन्नाभ्रमिव' इति, 'विभ्रष्टश्छिन्नाभ्र इव' इत्यपि च पाठौ ।

६. ३८ – 'विमूढो ब्रह्मणः पथि' इतिस्थाने 'विनाशं वाधिगच्छति' इति प्रायः काश्मीरपाठः ।

६. ३९ – 'एतन्मे' इतिस्थाने 'एतं मे' इति भास्करपाठः । 'एनं मे' इति, 'एवं मे' इति चान्यत्र पाठौ ।

६. ४० – 'तात' इतिस्थाने 'जातु' इति कासुचित् काश्मीरमातृकासु पाठः ।

६. ४१ – 'प्राप्य' इतिस्थाने 'प्राप्त°' इति पाठः ।

६. ४१ – 'पुण्यकृतां लोका°' इतिस्थाने 'पुण्यकृताँल्लोका°' इति पाठः ।

६. ४१ – 'शाश्वतीः' इतिस्थाने 'शाश्वती°' इति पाठः ।

६. ४१ – 'गेहे' इतिस्थाने 'लोके' इति पाठः ।

६. ४१ – '°भ्रष्टोऽभिजायते' इतिस्थाने '°भ्रष्टोऽपि जायते' इति, '°भ्रष्टो हि जायते' इति च पाठौ । '°नष्टोऽभिजायते' इत्यपि क्वचित् ।

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

---

६. ४२ – 'कुले भवति धीमताम्' इतिस्थाने 'कुले महति धीमताम्' इति, 'कुले भवति निर्मले' इति, 'जायते श्रीमतां कुले' इति च पाठान्तराणि । 'जायते धीमतां कुले' इति भास्करपाठः ।

६. ४३ – 'तं बुद्धि°' इतिस्थाने 'संबुद्धि°' इति पाठः ।

६. ४३ – 'पौर्वदेहिकम्' इतिस्थाने 'पौर्वदैहिकम्' इति, 'पूर्वदैहिकम्' इति, 'पूर्वदेहिकम्' इति च पाठाः ।

६. ४३ – 'यतते च ततो भूयः' इतिस्थाने 'ततो भूयोऽपि यतते' इति प्रायः काश्मीरपाठः ।

६. ४३ – 'संसिद्धौ' इतिस्थाने 'सिद्धये' इति क्वचित् पाठः ।

६. ४४ – 'ह्रियते' इतिस्थाने 'ह्रीयते' इति, 'क्रियते' इति च पाठौ ।

६. ४४ – 'ह्यवशोऽपि' इतिस्थाने 'ह्यवशो हि' इति पाठः ।

६. ४४ – 'सः' इतिस्थाने 'सन्' इति काश्मीरपाठः ।

६. ४४ – 'योगस्य' इतिस्थाने 'लोकस्य' इति पाठः ।

६. ४४ – 'शब्दब्रह्माति°' इतिस्थाने 'शब्दब्रह्मापि' इति, 'शब्दब्रह्म नि°' इति, 'शब्दब्रह्माभि' इति, 'शब्दब्रह्मादि' इति, 'शब्दब्रह्मा नि°' इति च पाठाः ।

६. ४५ – 'संशुद्ध°' इतिस्थाने 'विगत°' इति पाठः ।

६. ४५ – '°किल्बिषः' इतिस्थाने '°कल्मषः' इति पाठः ।

६. ४५ – '°संसिद्ध°' इतिस्थाने '°संशुद्ध°' इति पाठः ।

६. ४५ – 'याति परां' इतिस्थाने 'याति परं' इति पाठः । 'यान्ति परां' इति तु प्रामादिकः ।

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ध्यानयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

६. ४६ – 'ज्ञानिभ्योऽपि मतोऽधिकः' इतिस्थाने 'ज्ञानिभ्यश्च मतोऽधिकः' इति, 'ज्ञानिभ्योऽप्यधिको मतः' इति, 'ज्ञानिनोऽपि मतोऽधिकः' इति च पाठाः ।

६. ४६ – 'कर्मिभ्यश्चाधिको' इतिस्थाने 'कर्मिभ्योऽप्यधिको' इति, 'कर्मभिश्चाधिको' इति, 'कर्मभ्यश्चाधिको' इति, 'कर्मिभिश्चाधिको' इति च पाठाः ।

६. ४७ – 'योगिनामपि' इतिस्थाने 'योगानामपि' इति, 'योगिनां मम' इति च पाठौ । 'योगीनामपि' इति तु प्रामादिकः ।

६. ४७ – '°नान्तरात्मना' इतिस्थाने '°नान्तरात्मनाम्' इति, '°नातरात्मनः' इति च पाठौ ।

६. ४७ – '°वान् भजते' इतिस्थाने '°वाँल्लभते' इति पाठः ।

६. पुष्पिकायाम् – 'ध्यानयोगो' इतिस्थाने 'अध्यात्मयोगो' इति, 'अभ्यासयोगो' इति, 'आत्मसंयमयोगो' इति, 'आत्मयोगो' इति, 'आत्मसयोगो' इति, 'आत्मसंशययोगो' इति, 'संयमयोगो' इति, 'संन्यासयोगो' इति, 'योगाभ्यासो' इति, 'योगगर्भो' इति, 'योगिमहिमप्रतिपादनं' इति, 'ध्यानयोगब्रह्मप्राप्तिमार्गदर्शकरूपो' इति च पाठान्तराणि ।

## ॥ अथ सप्तमोऽध्यायः ॥

श्रीभगवानुवाच ।

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

---

७. १ – 'मय्यासक्त°' इतिस्थाने 'अभ्यासक्त°' इति पाठः ।
७. १ – 'योगं' इतिस्थाने 'योगो' इति पाठः ।
७. १ – 'मदाश्रयः' इतिस्थाने 'मदाश्रितः' इति कासुचित् काश्मीरमातृकासु पाठः ।
७. १ – 'मां' इतिस्थाने 'मा' इति पाठः ।
७. १ – 'ज्ञास्यसि तच्छृणु' इतिस्थाने 'ज्ञास्यति तच्छृणु' इति पाठः । 'यथा ज्ञानं लभिष्यति' इति यवद्वीपपाठः ।
७. २ – 'तेऽहं' इतिस्थाने 'ज्ञेयं' इति पाठः ।
७. २ – 'वक्ष्याम्यशेषतः' इतिस्थाने 'वक्ष्यामि शेषतः' इति पाठः ।
७. २ – 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इतिस्थाने 'चिन्तनीयं यदुत्कृष्टं सत्त्वं तदुपदिश्यते' इति भास्करपाठः, इति ति. रा. चिन्तामणिः ।
७. २ – 'नेह भूयोऽन्य°' इतिस्थाने 'न पुनः किंचि°' इति प्रायः काश्मीरपाठः ।
७. २ – '°मवशिष्यते' इतिस्थाने '°मिह शिष्यते' इति पाठः ।
७. ३ – '°कश्चिन्मां वेत्ति' इतिस्थाने 'कश्चिन्मामेति' इति पाठः ।
७. ४ – '°ऽनलो' इतिस्थाने '°ऽनिलो' इति पाठः ।
७. ५ – 'जीवभूतां' इतिस्थाने 'बीजभूतां' इति पाठः ।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

मत्तः परतरं नान्यत् किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

---

७. ६ – 'भूतानि सर्वाणीत्युप°' इतिस्थाने 'सर्वाणि भूतानीत्युप°' इति, 'भूतानि सर्वाणीत्यव°' इति च पाठौ ।

७. ६ – 'कृत्स्नस्य जगतः प्रभवः प्रलय°' इतिस्थाने 'सर्वस्य जगतः प्रभवः प्रलय°' इति पाठः । 'कृत्स्नस्य जगतः प्रलयः प्रभव°' इति प्रायः काश्मीरपाठः । 'कृत्स्नस्य लोकस्य प्रभवः प्रलय°' इति तु यवद्वीपपाठः ।

७. ७ – 'प्रोतं' इतिस्थाने 'प्रोक्तं' इति पाठः ।

७. ७ – 'सूत्रे' इतिस्थाने 'सूत्रेण' इति पाठः ।

७. ८ – 'प्रभास्मि' इतिस्थाने 'प्रकाशः' इति प्रायः काश्मीरपाठः । 'प्रभासः' इति यवद्वीपपाठः ।

७. ८ – '°वेदेषु' इतिस्थाने '°भूतेषु' इति पाठः ।

७. ८ – 'नृषु' इतिस्थाने 'नृप' इति प्रामादिकः पाठः ।

७. ९ – 'पुण्यो गन्धः पृथिव्यां च' इतिस्थाने 'पुण्यः पृथिव्यां गन्धोऽस्मि' इति प्रायः काश्मीरपाठः । 'पुण्यः पृथिव्यां गन्धोऽस्ति' इत्यपि क्वचित् पाठः । 'पुण्यो गन्धः पृथिव्यां हि' इति यवद्वीपपाठः ।

७. ९ – 'तेजश्चास्मि' इतिस्थाने 'तेजोऽस्मि च' इति यवद्वीपपाठः ।

७. ९ – 'जीवनं' इतिस्थाने 'जीविका' इति यवद्वीपपाठः ।

७. ११ – 'बलवतां चाहं' इतिस्थाने 'बलवतामस्मि' इति क्वचित् काश्मीरपाठः । 'बलवता चाहं' इत्यपि ।

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान् विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥

---

७. १२ – 'राजसास्तामसाश्च' इतिस्थाने 'तामसा राजसाश्च' इति कासुचित् काश्मीरमातृकासु पाठः ।

७. १२ – 'एवेति' इतिस्थाने 'एवेह' इति कासुचित् काश्मीरमातृकासु पाठः ।

७. १३ – 'सर्वमिदं' इतिस्थाने 'कर्ममयं' इति पाठः । 'कृत्स्नमिदं' इति भास्करपाठः ।

७. १३ – 'मोहितं' इतिस्थाने 'मोहनं' इति पाठः ।

७. १४ – 'दैवी' इतिस्थाने 'दिवि' इति पाठः ।

७. १४ – 'प्रपद्यन्ते' इतिस्थाने 'प्रपद्यन्ति' इति पाठः ।

७. १४ – 'मायामेतां' इतिस्थाने 'मायामति°' इति बह्वीषु काश्मीरमातृकासु पाठः ।

७. १५ – 'मां' इतिस्थाने 'मे' इति पाठः ।

७. १५ – 'प्रपद्यन्ते' इतिस्थाने 'नाद्रियन्ते' इति पाठः ।

७. १५ – 'माययापहृत°' इतिस्थाने 'मायया प्रहृत°' इति, 'मायया मद्भृत°' इति च पाठौ ।

७. १५ – '°माश्रिता' इतिस्थाने '°मास्थिता' इति पाठः ।

७. १५ – अस्य श्लोकस्यानन्तरं मातृकान्तरे अ. १६, श्लो. २० अत्र पठ्यते, पश्चाच्च यथास्थानमपि ।

७. १६ – 'जनाः सुकृतिनोऽर्जुन' इतिस्थाने 'नराः सुकृतिनोऽर्जुन' इति यवद्वीपपाठः । 'जनाः सुकृतिनः सदा' इति क्वचित् काश्मीरमातृकासु पाठः । 'जनाः प्रकृतिनोऽर्जुन' इत्यन्यत्र प्रामादिकः ।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

---

७. १७ – 'ज्ञानी' इतिस्थाने 'ज्ञाने' इति पाठः ।

७. १७ – 'एकभक्तिर्विशिष्यते' इतिस्थाने 'एकभक्तो विशिष्यते' इति, 'एकभक्तिर्विशिष्यति' इति च पाठौ । 'एका भक्तिर्विशिष्यते' इत्यपि क्वचित् ।

७. १७ – 'मम प्रियः' इतिस्थाने 'स मे प्रियः' इति पाठः ।

७. १८ – 'ज्ञानी' इतिस्थाने 'ज्ञाने' इति पाठः ।

७. १८ – 'मतम्' इतिस्थाने 'मतः' इति प्रायः काश्मीरपाठः ।

७. १८ – 'मामेवानुत्तमां' इतिस्थाने 'ममैवानुत्तमां' इति प्रायः काश्मीरपाठः । 'मामेवानुत्तमं' इत्यपि क्वचित् ।

७. १९ – 'स महात्मा सु°' इतिस्थाने 'मम माहात्म्यदु°' इति पाठः ।

७. २० – 'कामैस्तैस्तैर्हृत°' इतिस्थाने 'तैस्तैः कामैर्हृत°' इति 'कामैस्तैस्तैर्हृत°' इति च पाठौ ।

७. २० – 'नियम°' इतिस्थाने 'निश्चय°' इति पाठः ।

७. २० – 'नियताः स्वया' इतिस्थाने 'नियताः स्वयं' इति पाठः । 'नियतास्स्वया' इति च ।

७. २१ – 'भक्तः' इतिस्थाने 'भक्त्या' इति पाठः ।

७. २१ – '°मिच्छति' इतिस्थाने '°मर्हति' इति पाठः । '°मच्छति' इति तु प्रामादिकः ।

७. २१ – 'तस्याचलां' इतिस्थाने 'तस्यां चलां' इति नेपालपाठः, प्रायः प्रामादिकः ।

७. २१ – 'तामेव विदधाम्यहम्' इतिस्थाने 'तस्यां तस्यां ददाम्यहम्' इति पाठः । 'तामेव व्यदधाम्यहम्' इति तु प्रामादिकः ।

स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥

अन्तवत् तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

---

७. २२ – 'तया' इतिस्थाने 'तथा' इति पाठः ।

७. २२ – 'मयैव' इतिस्थाने 'मयेव' इति पाठः ।

७. २२ – 'हि तान्' इतिस्थाने 'हितान्' इति पदैक्यं शाङ्करभाष्ये निर्दिष्टम् ।

७. २३ तृ (*$\frac{1}{2}$) – अस्य श्लोकस्य तृतीयचरणानन्तरं कासुचित् काश्मीरमातृकासु अधिकः श्लोकार्धः पठ्यते यथा—

'पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या'

एवं वा—

'सिद्धान् यान्ति सिद्धव्रताः ।
भूतान् भूतयजो यान्ति'

७. २३ – 'मद्भक्ता' इतिस्थाने 'मद्भक्त्या' इति पाठः ।

७. २४ – 'मन्यन्ते' इतिस्थाने 'विदन्ति' इति पाठः ।

७. २४ – 'ममाव्यय°' इतिस्थाने 'ममात्यय°' इति पाठः ।

७. २४ – '°मनुत्तमम्' इतिस्थाने '°मनव्ययम्' इति, '°मनन्वयम्' इति च पाठौ ।

७. २५ – 'सर्वस्य' इतिस्थाने 'सर्वेषां' इति पाठः । 'सर्वश्च' इत्यपि क्वचित् ।

७. २५ – 'मूढोऽयं' इतिस्थाने 'लोकोऽयं' इति पाठः ।

७. २५ – 'लोको' इतिस्थाने 'मूढो' इति पाठः । 'लोकं' तथा 'लोके' इत्यपि क्वचित् ।

७. २६ – 'भविष्याणि च' इतिस्थाने 'भविष्यन्ति च' इति काश्मीरपाठः । 'भविष्यामि तु' इत्यपि क्वचिदुपलभ्यते ।

७. २६ – 'मां तु वेद न' इतिस्थाने 'न तु मां वेद' इति पाठः । 'मा तु वेद न' इत्यपि क्वचित् ।

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥
येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

---

७. २७ – '°समुत्थेन' इतिस्थाने '°समूढेन' इति पाठः ।
७. २७ – 'संमोहं' इतिस्थाने 'आ[व्या]मोहं' इति पाठः ।
७. २७ – 'सर्गे यान्ति' इतिस्थाने 'यान्ति सर्गे' इति पाठः । 'स्वर्गे यान्ति' इत्यपि क्वचित् ।
७. २८ – 'येषां त्वन्त°' इतिस्थाने 'येषां त्वन्तं' इति कासुचित् काश्मीरमातृकासु पाठः । अन्यत्र तु क्वचित् 'येपामन्त°' इति, 'तेषां त्वन्त°' इति, 'येषां त्वन्तर्°' इति, 'येषां द्वन्द्व°' इति च पाठाः ।
७. २८ – 'जनानां' इतिस्थाने 'नराणां' इति पाठः ।
७. २८ – '°कर्मणाम्' इतिस्थाने '°कर्मिणाम्' इति पाठः ।
७. २८ – 'द्वन्द्वमोह°' इतिस्थाने 'द्वन्द्वभाव°' इति पाठः ।
७. २९ – 'यतन्ति ये' इतिस्थाने 'यतन्ति ते' इति, 'यजन्ति ते' इति, 'भजन्ति ते' इति च पाठाः ।
७. २९ – 'ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं' इतिस्थाने 'ते तद्विदुर्ब्रह्म कृत्स्नमध्य(ध्य)क्तं' इति यवद्वीपपाठः । 'ते ब्रह्म तद्विदुः कृष्णमध्यात्मं' इत्यपि क्वचित् पाठः ।
७. ३० – '°भूताधिदैवं' इतिस्थाने 'भूताधिदेवं' इति, '°भूतादिदैवं' इति, '°भूताधिभूतं' इति च पाठाः ।
७. ३० – 'च ये विदुः' इतिस्थाने 'च तद्विदुः' इति, 'च ते विदुः' इति, 'यथा विदुः' इति, 'तथा विदुः' इति च पाठाः ।
७. पुष्पिकायाम् – 'ज्ञानविज्ञानयोगो' इतिस्थाने 'ज्ञानयोगो' इति, 'ज्ञानयोगकथनं' इति, 'ज्ञानविज्ञानवर्ण(न)योगो' इति, 'विज्ञानयोगो' इति, 'विज्ञानवर्णनयोगो' इति, 'सम्यग्दर्शनयोगो' इति, 'सम्यग्दर्शनो' इति, 'समग्रदर्शनो' इति, 'परापरयोगो' इति, 'अध्यात्मसंयोगो' इति, 'परमहंस्ययोगो' इति, 'परमहंसविज्ञानब्रह्मयोगो' इति, 'श्रीपरमेश्वरलक्षणो' इति, 'जगत्प्रसूतियोगो' इति च पाठान्तराणि ।

## ॥ अथाष्टमोऽध्यायः ॥

---

अर्जुन उवाच ।

किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

श्रीभगवानुवाच ।

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥

---

८. १ – 'किमध्यात्मं' इतिस्थाने 'किमध्यात्म' इति, 'किमध्यात्मा' इति, 'किमध्यात्मन्' इति च पाठाः ।

८. १ – 'अधिभूतं' इतिस्थाने 'आधिभूतं' इति पाठः ।

८. १ – 'किं प्रोक्तं' इतिस्थाने 'मे प्रोक्तं' इति पाठः ।

८. २ – 'अधियज्ञः कथं कोऽत्र' इतिस्थाने 'अधियज्ञश्च कस्तत्र' इति पाठः, तथा 'आधियज्ञः कथं कोऽत्र' इत्यपि ।

८. २ – '°काले च' इतिस्थाने '°कालेऽपि' इति प्रायः काश्मीरपाठः ।

८. २ – 'नियतात्मभिः' इतिस्थाने 'विदितात्मभिः' इति पाठः ।

८. ३ – 'ब्रह्म परमं' इतिस्थाने 'परमं ब्रह्म' इति वङ्गीयः, काश्मीरश्च पाठः ।

८. ३ – '°ऽध्यात्ममुच्यते' इतिस्थाने '°ऽध्यात्म उच्यते' इति पाठः ।

८. ३ – '°भावोद्भव°' इतिस्थाने '°भाव्योद्भव°' इति पाठः ।

८. ३ – '°संज्ञितः' इतिस्थाने '°संज्ञकः' इति, 'संज्ञितम्' इति च पाठौ ।

८. ४ – 'अधिभूतं क्षरो' इतिस्थाने 'अधिभूतोऽक्षरो' इति पाठः । क्वचित् 'अधिभूते क्षरो' इति, 'अधिभूतंकरो' इति, 'अधिभूताक्षरो' इति च पाठाः दृश्यन्ते ।

८. ४ – '°श्चाधिदैवतम्' इतिस्थाने '°श्चादि दैवतम्' इति पाठः ।

८. ४ – 'अधियज्ञोऽह°' इतिस्थाने 'अधिभूतोऽह°' इति, 'चादियज्ञोऽह°' इति 'अधियज्ञोऽय°' इति 'अधियज्ञेऽह°' इति च पाठाः ।

८. ४ – 'वर' इतिस्थाने 'वरः' इति पाठः । क्वचित् 'वरम्' इति च ।

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

---

८. ५ – 'अन्तकाले च मामेव' इतिस्थाने 'प्रयाणकालेऽपि च मां' इति, 'अन्तकालेऽपि मामेव' इति च पाठौ ।

८. ५ – 'मुक्त्वा' इतिस्थाने 'त्यक्त्वा' इति यवद्वीपपाठः ।

८. ५ – 'यः' इतिस्थाने 'या' इति, 'यत्' इति, 'यं' इति च पाठाः ।

८. ५ – 'प्रयाति' इतिस्थाने 'प्रयान्ति' इति प्रामादिकः पाठः ।

८. ५ – 'स मद्भावं' इतिस्थाने 'सा[सोऽ]हंभावं' इति यवद्वीपपाठः ।

८. ५ – 'याति नास्त्यत्र संशयः' इतिस्थाने 'स याति परमां गतिम्' इति यवद्वीपपाठः ।

८. ६ – 'वापि' इतिस्थाने 'चापि' इति प्रायः वङ्गीयपाठः । 'चान्ते' इत्यपि क्वचित् ।

८. ६ – '°त्यन्ते' इतिस्थाने '°त्येतत्' इति पाठः ।

८. ६ – 'तमेवैति' इतिस्थाने 'तमेवेति' इति पाठः ।

८. ६ – 'सदा' इतिस्थाने 'यदा' इति पाठः ।

८. ६ – 'तद्भाव°' इतिस्थाने 'सद्भाव°' इति, 'मद्भाव°' इति च पाठौ ।

८. ७ – 'युध्य' इतिस्थाने 'बुध्य' इति पाठः ।

८. ७ – 'मय्यर्पित°' इतिस्थाने 'मदर्पित°' इति पाठः ।

८. ७ – '°मेवैष्य°' इतिस्थाने '°मेवेष्य°' इति पाठः ।

८. ७ – '°वैष्यस्यसंशयः' इतिस्थाने '°वैष्यस्यसंशयम्' इति कासुचित् काश्मीरमातृकासु पाठः । '°वैष्यन्नसंशयम्' इत्यन्यत्र ।

८. ८ – 'नान्यगामिना' इतिस्थाने '°नन्यगामिना' इति प्रायः काश्मीरपाठः । 'अन्वगामिना' इति चान्यत्र क्वचित् ।

८. ८ – 'पार्थानुचिन्तयन्' इतिस्थाने 'पार्थानुचिन्तया' इति पाठः ।

कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

प्रयाणकाले मनसाचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्
स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत् ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥

---

८. ९ – 'पुराणमनु°' इतिस्थाने 'पुराणं ह्यनु°' इति पाठः ।

८. ९ – '°रणीयांसमनु°' इतिस्थाने '°रणीयान् समनु°' इति पाठः । '°रमणीयांसमनु°' इति तु प्रामादिकः ।

८. ९ – '°मचिन्त्यरूप°' इतिस्थाने '°मचिन्त्यशक्ति°' इति पाठः ।

८. ९ – '°मादित्यवर्णं' इतिस्थाने '°मादित्यरूपं' इति, '°मादित्यशक्तिं' इति च पाठौ ।

८. ९ – 'परस्तात्' इतिस्थाने 'पुरस्तात्' इति पाठः ।

८. १० – 'युक्तो' इतिस्थाने 'युतो' इति पाठः ।

८. १० – 'स तं परं' इतिस्थाने 'सन्तं पारं' इति पाठः ।

८. ११ – 'वेदविदो' इतिस्थाने 'ब्रह्मविदो' इति पाठः ।

८. ११ – 'विशन्ति' इतिस्थाने 'विदन्ति' इति पाठः ।

८. ११ – 'यद्यतयो' इतिस्थाने 'यद्यातयो' इति पाठः ।

८. ११ – 'तत् ते' इतिस्थाने 'ततो' इति पाठः ।

८. ११ – 'संग्रहेण प्रवक्ष्ये' इतिस्थाने 'संग्रहणे प्रवक्ष्ये' इति, 'संग्रहेण ब्रवीमि इति, 'संग्रहेणेव वक्ष्ये' इति च पाठाः । 'संग्रहेणाभिधास्ये' (पा. भे., अभिदास्ये) इति तु प्रायः काश्मीरपाठः ।

८. ११ [*१] – अस्माच्छ्लोकादनन्तरं क्वचिन्मातृकान्तरे( एकादशश्लोकस्य उत्तरार्धस्य जायमानं पुनःपठनमङ्गीकृत्य)पठ्यतेऽधिकः श्लोको यथा—

'सर्वे वेदा यत् पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत् ते पदं संग्रहेण ब्रवीमि ॥'

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

ॐ इत्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

---

८. १२ – 'निरुध्य' इतिस्थाने 'निधाय' इति पाठः ।

८. १२ – 'मूर्ध्न्याधायात्मनः' इतिस्थाने 'मूर्ध्नादायात्मनः' इति, 'मूर्ध्नाधायात्मनः' इति, 'मूर्ध्न्याधाय मनः' इति च पाठाः ।

८. १२ – 'प्राणमास्थितो' इतिस्थाने 'प्राणानास्थितो' इति पाठः ।

८. १२ – '°धारणाम्' इतिस्थाने '°धारणम्' इति, '°धारणात्' इति च पाठौ ।

८. १२ – उत्तरार्धः यवद्वीपपाठे यथा—
'मूर्धन्याधाय च प्राणानास्थितो योगे धारयेत् ।'

८. १३ – 'त्यजन् देहं स याति परमां गतिम्' इतिस्थाने 'स मद्भावं याति नास्त्यत्र संशयः' इति पाठः ।

८. १४ – 'नित्ययुक्तस्य' इतिस्थाने 'नित्ययोगस्य' इति पाठः ।

८. १४ – 'योगिनः' इतिस्थाने 'देहिनः' इति कासुचित् काश्मीरमातृकासु पाठः ।

८. १५ – 'नाप्नुवन्ति' इतिस्थाने 'प्राप्नुवन्ति' इति पाठः ।

८. १५ – 'महात्मानः' इतिस्थाने 'न चात्मानं' इति पाठः ।

८. १५ – 'गताः' इतिस्थाने 'गतः' इति प्रामादिकः पाठः ।

८. १६ – 'आ ब्रह्मभुवनाल्लोकाः' इतिस्थाने 'आ ब्रह्मभुवनाल्लोकान्' इति, 'आब्रह्म-भुवना लोकाः' इति, 'आ ब्रह्मभवनाल्लोकात्' इति च पाठाः ।

८. १६ – 'पुनरावर्तिनो°' इतिस्थाने 'पुनरावृत्तिनो°' इति पाठः ।

८. १६ – '°मुपेत्य तु' इतिस्थाने '°मुपेयति' इति पाठः ।

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥

परस्तस्मात् तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।

---

८. १७ – '°महर्यद्ब्रह्मणो' इतिस्थाने '°महर्यें ब्रह्मणो' इति प्रायः काश्मीरपाठः ।

८. १७ – 'रात्रिं' इतिस्थाने 'रात्रिर्' इति प्रामादिकः पाठः ।

८. १७ – '°सहस्रान्तां' इतिस्थाने '°सहस्रान्तं' इति पाठः । क्वचित् 'सहस्राणां' इति, 'सहस्रान्ते' इत्यपि च पाठः ।

८. १७ – '°रात्र°' इतिस्थाने '°रात्रि°' इति पाठः ।

८. १८ – 'अव्यक्ताद्व्यक्तयः' इतिस्थाने 'अव्यक्ताव्यक्तयः' इति प्रामादिकः पाठः ।

८. १८ – 'प्रभवन्त्य°' इतिस्थाने 'प्रलयन्त्य°' इति पाठः ।

८. १८ – '°संज्ञके' इतिस्थाने '°संज्ञिके' इति, '°संज्ञिते' इति च पाठौ ।

८. १९ – 'एवायं' इतिस्थाने 'एवाहं' इति पाठः ।

८. १९ – 'भूत्वा भूत्वा' इतिस्थाने 'एवं भूत्वा' इति पाठः ।

८. १९ – '°ऽवशः' इतिस्थाने '°ऽवशं' इति पाठः ।

८. १९ – 'प्रभवत्य°' इतिस्थाने 'प्रभवन्त्य°' इति पाठः ।

८. २० – 'परस्तस्मात् तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः' इतिस्थाने 'परात् तस्मात् तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः' इति पाठस्तथा 'परस्तस्मात् तु भावोऽन्यो व्यक्ताव्यक्तसनातनः' इति, 'परस्तस्मात् तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः' इति प्रायः काश्मीरपाठाः । 'परस्तस्मात् तु भावोऽन्यः पुरुषाख्यः सनातनः' इति तु आनन्दवर्धनटीकायाम् ।

८. २० – 'यः स सर्वेषु भूतेषु' इतिस्थाने 'यस्तु सर्वेषु भूतेषु' इति पाठः । 'यः समः सर्वभूतेषु' इति, 'यः सर्व एवेषु' इति, 'यः सर्वेष्वपि भूतेषु' इति च दृश्यन्ते ।

८. २१ – 'अव्यक्तोऽक्षर' इतिस्थाने 'अव्यक्तः क्षर' इति पाठः ।

८. २१ – 'इत्युक्त°' इतिस्थाने 'इत्याहु°' इति पाठः ।

८. २१ – '°स्तमाहुः' इतिस्थाने '°स्तामाहुः' इति पाठः ।

यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

---

८. २१ – 'यं' इतिस्थाने 'यत्' इति पाठः ।
८. २१ – 'मम' इतिस्थाने 'पदम्' इति पाठः ।
८. २२ – 'पुरुषः स परः' इतिस्थाने 'पुरुषः स परा' इति, 'पुरुषः स परं' इति, 'पुरुषः परमः' इति च पाठाः ।
८. २२ – 'लभ्यस्त्व°' इतिस्थाने 'लभ्यो ह्य°' इति पाठः ।
८. २२ पू(*१) – पूर्वार्धादनन्तरं श्लोकार्थोऽधिको कासुचित् काश्मीरमातृकासु यथा—
'यं ( पा. भे., मां ) प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन ।
८. २२ – 'यस्यान्तः°' इतिस्थाने 'तस्यान्तः°' इति पाठः ।
८. २२ – 'येन सर्वमिदं ततम्' इतिस्थाने 'यत्र सर्वं प्रतिष्ठितम्' इति कासुचित् काश्मीरमातृकासु पाठः ।
८. २३ – '°वृत्तिमावृत्तिं' इतिस्थाने '°वृत्तिं प्रवृत्तिं' इति पाठः ।
८. २३ – 'प्रयाता यान्ति' इतिस्थाने 'प्रयता यान्ति' इति पाठः ।
८. २३ – 'भरतर्षभ' इतिस्थाने 'पुरुषर्षभ' इति पाठः ।
८. २४ – 'अग्निर्ज्योति°' इतिस्थाने 'अग्निज्योति°' इति पाठः ।
८. २४ – '°रहः' इतिस्थाने '°रिह' इति पाठः ।
८. २४ – 'शुक्लः' इतिस्थाने 'शुक्ला' इति पाठः ।
८. २४ – 'षण्मासा उत्त°' इतिस्थाने 'षण्मासादुत्त°' इति पाठः ।
८. २४ – 'जनाः' इतिस्थाने 'जनः' इति पाठः ।
८. २५ – 'धूमो रात्रिस्तथा कृष्णः' इतिस्थाने 'धूमः कृष्णस्तथा रात्रिः' इति कासुचित् काश्मीरमातृकासु पाठः । तथा 'धूमो रात्रिस्तथा कृष्णा' इत्यपि ।
८. २५ – 'षण्मासा दक्षि°' इतिस्थाने 'षण्मासाद्दक्षि°' इति पाठः ।
८. २५ – 'चान्द्रमसं' इतिस्थाने 'चन्द्रमसो' इति पाठः ।
८. २५ – '°र्योगी' इतिस्थाने '°र्योगं' इति पाठः ।

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६ ॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत् पुण्यफलं प्रदिष्टम् ।
अत्येति तत् सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अक्षरब्रह्मयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

---

८. २६ – '°कृष्णे गती' इतिस्थाने '°कृष्णगती' इति कासुचित् काश्मीरमातृकासु पाठः । '°कृष्णे गते' इत्यपि क्वचित् ।

८. २६ – 'शाश्वते' इतिस्थाने 'शाश्वती' इति पाठः ।

८. २६ – 'मते' इतिस्थाने 'समे' इति पाठः । 'मतः' इति तु प्रामादिकः ।

८. २६ – 'उत्तरार्धः कासुचित् काश्मीरमातृकासु पठ्यते यथा—
'अनयोर्यात्यनावृत्तिमेकया(पा. भे., माद्यया)वर्ततेऽन्यया ।'
'एकयात्यात्मनावृत्तिमन्ययावर्तते पुनः ।'
इत्यपि क्वचित् ।

८. २७ – 'नैते' इतिस्थाने 'एते' इति पाठः । 'नृते' इति तु प्रामादिकः ।

८. २७ – 'सृती' इतिस्थाने 'गती' इति पाठः । 'सृते' इति, 'नृती' इत्यपि क्वचित् ।

८. २८ – 'दानेषु' इतिस्थाने 'दाने च' इति पाठः ।

८. २८ – 'प्रदिष्टम्' इतिस्थाने 'प्रविष्टम्' इति पाठः ।

८. २८ – 'अत्येति' इतिस्थाने 'अभ्येति' इति, 'अन्त्ये च' इति, 'अन्वेति' इति च पाठाः ।

८. २८ – 'चाद्यम्' इतिस्थाने 'शान्तम्' इति, 'वाद्यम्' इति, 'दिव्यम्' इति च पाठाः ।

८. पुष्पिकायाम् – 'अक्षरब्रह्मयोगो' इतिस्थाने 'अक्षरपरब्रह्मयोगो' इति, 'ब्रह्माक्षरनिर्देशो' इति, 'ब्रह्मयोगो' इति, 'तारकब्रह्मयोगो' इति, 'अक्षरब्रह्मयोगज्ञानेन परमगतिप्राप्तिनिरूपणम्' इति, 'पुरुषोत्तमयोगो' इति, 'पुरुषयोगो' इति, 'महापुरुषयोगो' इति, 'महापुरुषदर्शनो' इति, 'अध्यात्मपुरुषदर्शो' इति, 'आत्मयोगो' इति, 'धारणायोगो' इति, 'प्रयाणकालयोगो' इति च पाठान्तराणि ।

## ॥ अथ नवमोऽध्यायः ॥

---

श्रीभगवानुवाच ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

---

९. १ – 'गुह्यतमं' इतिस्थाने 'गृह्यतमम्' इति पाठः ।
९. १ – 'अनसूयवे' इतिस्थाने 'अनसूयये' इति, 'अनसूयते' इति, 'अनुसूयवे' इति च पाठाः ।
९. १ – '°ज्ञानं विज्ञानसहितं' इतिस्थाने 'ज्ञानविज्ञानसहितं' इति क्वचित् पाठः । 'ज्ञानविज्ञानरहितं(!)' इति तु यवद्वीपपाठः ।
९. १ – 'यज्ज्ञात्वा' इतिस्थाने 'यच्छ्रुत्वा' इति पाठः ।
९. १ – 'मोक्ष्यसे' इतिस्थाने 'मोक्षसे' इति प्रामादिकः पाठः ।
९. २ – '°मुत्तमम्' इतिस्थाने '°मव्ययम्' इति, '°मद्भुतम्' इति च पाठौ ।
९. २ – 'प्रत्यक्षावगमं' इतिस्थाने 'प्रत्यक्षरगमं' इति पाठः ।
९. २ – 'धर्म्यं' इतिस्थाने 'धर्मं' इति पाठः ।
९. २ – 'सुसुखं' इतिस्थाने 'ससुखं' इति पाठः ।
९. ३ – 'धर्मस्यास्य' इतिस्थाने 'ज्ञानस्यास्य' इति पाठः ।
९. ३ – 'मृत्यु°' इतिस्थाने 'मृति°' इति, 'मृत्युः' इति च पाठौ ।
९. ४ – 'सर्वं' इतिस्थाने 'कृत्स्नं' इति कासुचित् काश्मीरमातृकासु पाठः ।
९. ४ – 'जगदव्यक्त°' इतिस्थाने 'जगदव्यय°' इति पाठः ।
९. ४ – 'तेष्ववस्थितः' इतिस्थाने 'ते व्यवस्थितः' इति प्रामादिकः पाठः ।

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥

---

९. ५ – 'ममात्मा' इतिस्थाने 'भूतात्मा' इति, 'धर्मात्मा' इति च पाठौ ।

९. ५ [*१] – मातृकान्तरे अत्राधिकः श्लोकः पठ्यते यथा—

' सर्वगः सर्वविच्चिद्यः सर्वकृत् सर्वदर्शनः ।
सर्वतः सर्वदर्शी च सर्वात्मा सर्वतोमुखः ॥ '

९. ६ – 'नित्यं वायुः' इतिस्थाने 'वायुर्नित्यं' इति पाठः ।

९. ६ – '°त्युपधारय' इतिस्थाने '°त्यवधारय' इति पाठः । '°त्युपधारयन्' इति च क्वचित् ।

९. ६[*१] – कासुचित् काश्मीरमातृकास्वत्राधिकः श्लोकः पठ्यते यथा—

' एवं हि सर्वभूतेषु( पा. भे., सर्वभावेषु, सर्वेषु भूतेषु)
चरा(पा. भे., ला)म्यनभिलक्षितः ।
भूतप्रकृतिमास्थाय
सहैव च ( पा. भे., सह चैव ) विनैव च ॥ '

अयमधिकः श्लोकः नेपालपाठेऽपि निवेशितः उपलभ्यते ।

९. ७ – 'मामिकाम्' इतिस्थाने 'मामकाम्' इति, 'मामकीम्' इति च पाठौ ।

९. ७ – 'कल्पक्षये' इतिस्थाने 'अल्पक्षये' इति पाठः ।

९. ८ – 'स्वामवष्टभ्य' इतिस्थाने 'स्वामधिष्ठाय' इति, 'स्वामपष्टभ्य' इति च पाठौ ।

९. ८ – '°ग्राममिमं' इतिस्थाने '°ग्राममिदं' इति कासुचित् काश्मीरमातृकासु पाठः ।

९. ८ – '°वंशात्' इतिस्थाने '°वंधात्' इति पाठः ।

९. ९ – 'न च' इतिस्थाने 'न तु' इति पाठः ।

९. ९ – '°मसक्तं' इतिस्थाने '°मसक्ते' इति पाठः ।

९. ९ – 'तेषु' इतिस्थाने 'तेन' इति पाठः ।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ११ ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

---

९. १० – 'सूयते' इतिस्थाने 'सूयेत' इति पाठः ।

९. १० – 'सचराचरम्' इतिस्थाने 'च चराचरम्' इति पाठः ।

९. १० – 'जगद्विपरि°' इतिस्थाने 'जगद्धि परि°' इति पाठः ।

९. ११ – 'मानुषीं' इतिस्थाने 'मानुषी°' इति पाठः ।

९. ११ – '°माश्रितम्' इतिस्थाने '°मास्थितम्' इति, '°माश्रिताः' इति च पाठौ ।

९. ११ – 'परं' इतिस्थाने 'पर°' इति पाठः ।

९. ११ – 'मम भूतमहेश्वरम्' इतिस्थाने 'सर्वभूतमहेश्वरम्' इति, 'ममाव्ययमनुत्तमम्' इति च काश्मीरपाठौ ।

९. १२ – 'मोघाशा मोघकर्माणो' इतिस्थाने 'मोघदाशा मोघकाणा' इति प्रामादिकः पाठः ।

९. १२ – 'मोघज्ञाना विचेतसः' इतिस्थाने 'मोघज्ञानविचेतसः' इति, 'मोघज्ञाना-मचेतसाः' इति च पाठौ ।

९. १२ – 'राक्षसीमासुरीं' इतिस्थाने 'आसुरीं राक्षसीं' इति प्रायः काश्मीरपाठः ।

९. १२ – 'मोहिनीं' इतिस्थाने 'मोहनीं' इति पाठः ।

९. १२ – 'श्रिताः' इतिस्थाने 'स्थिताः' इति पाठः ।

९. १३ – 'मां पार्थ' इतिस्थाने 'मे पार्थ' इति पाठः ।

९. १३ – '°माश्रिताः' इतिस्थाने '°मास्थिताः' इति पाठः, '°माश्रितम्' इति च क्वचित् ।

९. १३ – 'भजन्त्यनन्य°' इतिस्थाने 'भजन्ते नान्य°' इति, 'भजन्तेऽनन्य°' इति च पाठौ ।

९. १३ – 'ज्ञात्वा' इतिस्थाने 'सूत्वा' इति पाठः ।

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥

पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ १७ ॥

गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥

---

९. १४ – 'कीर्तयन्तो मां' इतिस्थाने 'कीर्तयन्तश्च' इति प्रायः काश्मीरपाठः ।

९. १४ – 'यतन्तश्च दृढव्रताः' इतिस्थाने 'यतमाना दृढव्रताः' इति, 'यतन्तश्च यतव्रताः' इति, 'यतमाना यतव्रताः' इति, 'यतन्तो मां दृढव्रताः' इति काश्मीरपाठाः । 'यजन्तश्च दृढव्रताः' इत्यपि क्वचित् ।

९. १४ – 'नमस्यन्तश्च' इतिस्थाने 'मनस्यन्तश्च' इति पाठः ।

९. १५ – 'यजन्तो' इतिस्थाने 'यजन्ते' इति नेपालपाठः ।

९. १५ – 'पृथक्त्वेन' इतिस्थाने 'बहुत्वेन' इति पाठः ।

९. १६ – '°मौषधम्' इतिस्थाने '°मोषधिः' इति यवद्वीपपाठः ।

९. १६ – '°मेवाज्य°' इतिस्थाने '°मेवाद्य°' इति पाठः ।

९. १६ – 'हुतम्' इतिस्थाने 'कृतम्' इति पाठः ।

९. १७ – 'पिताहमस्य' इतिस्थाने 'पितामहस्य' इति पाठः ।

९. १७ – 'माता धाता' इतिस्थाने 'धाता माता' इति पाठः ।

९. १७ – 'वेद्यं' इतिस्थाने 'विश्वं' इति पाठः ।

९. १७ – '°मोंकार ऋक्°' इतिस्थाने '°मोंकारमृक्' इति पाठः ।

९. १७ – 'ऋक् साम यजुरेव च' इतिस्थाने 'ऋग्यजुः साम एव च' इति, '°ऽथर्वं ऋक् साम वै यजुः' इति च पाठौ ।

९. १८ – 'प्रभुः' इतिस्थाने 'सुहृत्' इति पाठः ।

९. १८ – 'प्रभवः प्रलयः स्थानं' इतिस्थाने 'प्रभवप्रलयस्थानं' इति रामानुजीयपाठः । 'प्रभवः प्रलयः स्थानं' इति, 'प्रभवः प्रलयं स्थानं' इत्यपि क्वचित् ।

९. १८ – 'निधानं' इतिस्थाने 'निदानं' इति पाठः ।

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २० ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २१ ॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

---

९. १९ – '°म्युत्सृजामि' इतिस्थाने '°म्युत्सृजानि' इति पाठः ।
९. १९ – 'सदसच्चाह°' इतिस्थाने 'सदा सच्चाह°' इति, 'सह सच्चाह°' इति च पाठौ ।
९. २० – 'त्रैविद्या' इतिस्थाने 'त्रयी विद्या' इति पाठः ।
९. २० – 'सोमपाः पूत°' इतिस्थाने 'सोमपा धूत°' इति पाठः ।
९. २० – 'प्रार्थयन्ते' इतिस्थाने 'प्रार्थयन्ति' इति पाठः ।
९. २० – 'लोकम°' इतिस्थाने 'लोकाव°' इति पाठः ।
९. २० – 'देवभोगान्' इतिस्थाने 'देहभोगान्' इति पाठः ।
९. २१ – 'ते तं' इतिस्थाने 'तं तं' इति पाठः ।
९. २१ – 'क्षीणे पुण्ये' इतिस्थाने 'पुण्ये क्षीणे' इति पाठः ।
९. २१ – 'मर्त्यलोकं' इतिस्थाने 'मृत्युलोकं' इति, 'मर्त्यलोके' इति च पाठौ ।
९. २१ – 'त्रयीधर्म°' इतिस्थाने 'हि त्रैधर्म्य°' इति, 'हि त्रयीधर्म्य°' इति च पाठौ ।
९. २१ – '°प्रपन्ना' इतिस्थाने '°प्रविष्टा' इति पाठः ।
९. २१ – 'गतागतं' इतिस्थाने 'गतागतिं' इति पाठः ।
९. २१ – 'कामकामा' इतिस्थाने 'कामकामं' इति पाठः ।
९. २२ – '°श्चिन्तयन्तो' इतिस्थाने '°श्च विरक्ता' इति रामकविटीकायां पाठः ।
९. २२ – 'योग°' इतिस्थाने 'योगं' इति पाठः ।
९. २२ – 'वहाम्यहम्' इतिस्थाने 'ददाम्यहम्' इति 'वदाम्यहम्' इति च पाठौ ।

येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥
यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥
यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ २७ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥

---

९. २३ – 'येऽप्यन्यदेवता भक्ता' इतिस्थाने 'ये त्वन्यदेवता भक्ता' इति, 'येऽप्यन्यदेवता भक्त्या' इति, 'ये त्वन्यदेवता भक्त्या' इति च पाठाः । शाङ्करभाष्ये '°देवताभक्ताः' इति ससमासः पाठः ।

९. २३ – 'मामेव' इतिस्थाने 'मामेत्य' इति पाठः ।

९. २३ – 'यजन्त्यवि°' इतिस्थाने 'यजन्तेऽवि°' इति, 'यजन्ति वि°' इति च पाठौ ।

९. २४ – '°यज्ञानां' इतिस्थाने '°भूतानां' इति पाठः ।

९. २४ – '°श्च्यवन्ति' इतिस्थाने '°श्चलन्ति' इति, '°श्च्यवन्ते' इति च पाठौ । '°ञ्यचन्ति' इत्यपि क्वचित् ।

९. २६ – 'यो मे' इतिस्थाने 'यो मा' इति पाठः ।

९. २६ – 'भक्त्युप°' इतिस्थाने 'भक्त्यप°' इति पाठः ।

९. २७ – 'यत् तपस्यसि' इतिस्थाने 'यश्च पश्यसि' इति यवद्वीपपाठः । 'यत् तत् पश्यसि' इत्यपि क्वचिदुपलभ्यते ।

९. २८ – '°फलैरेवं' इतिस्थाने '°फलैरेव' इति पाठः ।

९. २८ – 'मोक्ष्यसे' इतिस्थाने 'मोक्षसे' इति प्रामादिकः पाठः ।

९. २८ – 'मामुपैष्यसि' इतिस्थाने 'मामुपेष्यसि' इति पाठः ।

९. २९ – 'समोऽहं' इतिस्थाने 'समूहं' इति पाठः । तथा 'संमोहं' इत्यपि ।

९. २९ – 'न प्रियः' इतिस्थाने 'नः प्रियः' इति, 'मत्प्रियः' इति च पाठौ ।

९. २९ – 'तु मां' इतिस्थाने 'च मां' इति पाठः ।

९. २९ – 'मयि ते तेषु चाप्यहम्' इतिस्थाने 'मयि तेषु न चाप्यहम्' इति पाठः ।

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

---

९. ३० – 'सुदुराचारो' इतिस्थाने 'स दुराचारो' इति पाठः।
९. ३० – 'व्यवसितो' इतिस्थाने 'व्यवहितो' इति पाठः।
९. ३१ – 'निगच्छति' इतिस्थाने 'स गच्छति' इति, 'न गच्छति' इति च पाठौ। 'नियच्छति' इति प्रायो वङ्गीयपाठः कासुचित् काश्मीरमातृकास्वपि दृश्यते।
९. ३१ – 'प्रतिजानीहि' इतिस्थाने 'प्रतिजानेऽहं', 'प्रतिजाने हि' इति क्वचित् पाठौ।
९. ३१ – 'मे भक्तः' इतिस्थाने 'मद्भक्तः' इति प्रायः काश्मीरपाठः।
९. ३१ – 'प्रणश्यति' इतिस्थाने 'प्रयच्छति' इति क्वचित् प्रामादिकः पाठः।
९. ३२ – 'तेऽपि यान्ति परां' इतिस्थाने 'ते यान्ति परमां' इति पाठः।
९. ३३ – 'भक्ता' इतिस्थाने 'भक्त्या' इति पाठः।
९. ३३ – 'राजर्षयस्तथा' इतिस्थाने 'राजर्षिसत्तमाः' इति पाठः।
९. ३३ – '°मिमं प्राप्य' इतिस्थाने '°मनुचिन्त्य' इति पाठः। '°मिदं प्राप्य' इति चान्यत्र।
९. ३४ – '°वैष्यसि' इतिस्थाने '°वेष्यसि' इति पाठः।
९. ३४ – 'युक्त्वैव°' इतिस्थाने 'युङ्क्त्वैव°' इति, 'युक्तैव°' इति, 'मुक्त्वैव°' इति च पाठाः।
९. ३४ – 'युक्त्वैवमात्मानं मत्परायणः' इतिस्थाने 'सत्यं ते प्रतिजाने प्रियोऽसि मे' इति पाठः।
९. ३४ – 'मत्परायणः' इतिस्थाने 'मत्परायणम्' इति पाठः।
९. पुष्पिकायाम् – 'राजविद्याराजगुह्ययोगो', इतिस्थाने 'राजविद्याराजयोगो' इति, 'राजविद्यायोगो' इति, 'राजविद्यादियोगो' इति, 'राजविद्याराजगुह्यो' इति, 'राजयोगो' इति, 'राजगुह्यो' इति, 'राजगुह्ययोगो' इति, 'राजगुह्यराजयोगो' इति, 'भक्तियोगो' इति, 'आत्मनिर्णययोगो' इति, 'प्रकृतियोगो' इति, 'प्रकृतिपुरुषयोगो' इति च पाठान्तराणि।

## ॥ अथ दशमोऽध्यायः ॥

श्रीभगवानुवाच ।

भूय एव महाबाहो शृणु मे परमं वचः ।
यत् तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

---

१०. १ – 'यत् ते' इतिस्थाने 'तत् ते' इति पाठः ।

१०. १ – 'प्रीयमाणाय' इतिस्थाने 'प्रियमाणाय' इति प्रामादिकः पाठः ।

१०. २ – 'प्रभवं न' इतिस्थाने 'प्रभावं न' इति, 'प्रभवं च' इति, 'प्रभवं नो' इति च पाठाः ।

१०. २ – 'महर्षीणां च' इतिस्थाने 'महर्षीणां हि' इति पाठः ।

१०. ३ – 'स मर्त्येषु' इतिस्थाने 'समर्थेषु' इति पाठः ।

१०. ४ – 'बुद्धिर्ज्ञान°' इतिस्थाने 'बुद्धिज्ञान°' इति पाठः ।

१०. ४ – 'दमः शमः' इतिस्थाने 'शमो दमः' इति पाठः ।

१०. ४ – '°ऽभावो' इतिस्थाने 'भारो' इति पाठः ।

१०. ४ – 'चाभय°' इतिस्थाने 'वाभय°' इति पाठः ।

१०. ५ – 'समता' इतिस्थाने 'ममता' इति पाठः ।

१०. ५ – 'दानं' इतिस्थाने 'धानं' इति पाठः ।

१०. ५ – 'भावा' इतिस्थाने 'भाव°' इति पाठः ।

१०. ५ – 'एव' इतिस्थाने 'एवं' इति पाठः ।

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥ ६॥
एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः॥ ७॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः॥ ८॥
मच्चिता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥ ९॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ १०॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥ ११॥

अर्जुन उवाच।

परं ब्रह्म परं धाम पवित्रं परमं भवान्।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥ १२॥

---

१०. ६ – 'मानसा' इतिस्थाने 'मानुषा' इति, 'मानवा' इति, 'मनसा' इति च पाठाः।
१०. ६ – 'येषां' इतिस्थाने 'एषां' इति पाठः।
१०. ६ – 'लोक' इतिस्थाने 'लोका' इति पाठः।
१०. ७ – 'एतां' इतिस्थाने 'येषां' इति पाठः।
१०. ७ – 'विभूतिं योगं' इतिस्थाने 'विभूतियोगं' इति पाठः।
१०. ७ – '°ऽविकम्पेन' इतिस्थाने '°ऽविकल्पेन' इति, '°ऽपि कम्पेन' इति, '°ऽविकम्प्येन' इति च पाठाः।
१०. ८ – 'अहं' इतिस्थाने 'अयं' इति प्रायः काश्मीरपाठः।
१०. ८ – 'प्रभवो मत्तः' इतिस्थाने 'प्रभव इतः' इति प्रायः काश्मीरपाठः।
१०. ८ – '°समन्विताः' इतिस्थाने '°समस्थिताः' इति प्रामादिकः पाठः।
१०. ९ – 'मद्गत°' इतिस्थाने 'मरुत°' इति पाठः। 'मद्गतः' इति तु प्रामादिकः।
१०. ९ – 'बोधयन्तः' इतिस्थाने '°ऽबोधयन्त' इति नेपालपाठः।
१०. ९ – 'तुष्यन्ति च रमन्ति' इतिस्थाने 'स्तोष्यन्ति रमयन्ति' इति, 'पुष्यन्ति च रमन्ति' इति, 'तुष्यन्ति रमयन्ति' इति च पाठाः।
१०. ११ – '°भावस्थो' इतिस्थाने '°भावस्थे' इति, '°भावस्था°' इति च पाठौ।
१०. १२ – 'ब्रह्म परं धाम' इतिस्थाने 'धाम परं ब्रह्म' इति पाठः।

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥ १७ ॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

---

१०. १३ – 'मे' इतिस्थाने 'माम्' इति प्रायः काश्मीरपाठः ।
१०. १४ – 'यन्मां' इतिस्थाने 'यन्मे' इति कासुचित् काश्मीरमातृकासु पाठः । 'यन्मा' इति, 'यं मां' इति, 'यं तां' इति चान्यत्र क्वचित् ।
१०. १४ – 'न हि ते' इतिस्थाने 'न हि मे' इति पाठः ।
१०. १४ – 'व्यक्तिं' इतिस्थाने 'भक्तिं' इति, 'व्यक्तं' इति, 'भक्तं' इति च पाठाः ।
१०. १४ – '°र्देवा न दानवाः' इतिस्थाने '°र्देवा महर्षयः' इति प्रायः काश्मीरपाठः, '°र्देवमहर्षयः' इत्यपि क्वचित् ।
१०. १५ – अयं श्लोक आनन्दवर्धनेन न पठितः ।
१०. १५ – 'वेत्थ' इतिस्थाने 'वेत्सि' इति पाठः ।
१०. १६ – 'दिव्या ह्यात्मविभूतयः' इतिस्थाने 'विभूतीरात्मनः शुभाः' इति प्रायः काश्मीरपाठः, 'दिव्या आत्मविभूतयः' इत्यपि क्वचित् ।
१०. १६ – '°निमांस्त्वं' इतिस्थाने '°न्नित्यं त्वं' इति, '°न्नित्यं स' इति, '°निमास्त्वं' इति च पाठाः ।
१०. १६ – 'व्याप्य' इतिस्थाने 'प्राप्य' इति पाठः ।
१०. १६ – 'तिष्ठसि' इतिस्थाने 'तिष्ठति' इति पाठः ।
१०. १७ – 'विद्यामहं°' इतिस्थाने 'विन्द्यामहं°' इति, 'विद्यां महा°' इति, 'विन्द्यां महा°' इति च पाठाः ।
१०. १७ – 'योगिंस्त्वां सदा' इतिस्थाने 'योगिंस्त्वामहं' इति प्रायः काश्मीरपाठः । 'योगिस्त्वां सदा' इति तु प्रामादिकः ।
१०. १७ – 'केषु केषु च' इतिस्थाने 'तेषु लोकेषु' इति पाठः ।
१०. १८ – 'मेऽमृतम्' इतिस्थाने 'मे मतम्' इति पाठः ।

श्रीभगवानुवाच ।

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

---

१०. १९ – 'दिव्या ह्यात्मविभूतयः' इतिस्थाने 'विभूतीरात्मनः शुभाः' इति प्रायः काश्मीरपाठः ।

१०. २० – 'गुडाकेश' इतिस्थाने 'गुडाकेशः' इति वङ्गीयपाठः ।

१०. २० – '°भूताशय°' इतिस्थाने '°भूताशये' इति वङ्गीयपाठः ।

१०. २० – '°मादिश्च' इतिस्थाने '°माद्यश्च' इति पाठः ।

१०. २० – 'मध्यं च' इतिस्थाने 'मध्यश्च' इति पाठः ।

१०. २१ – 'ज्योतिषां रविरंशुमान्' इतिस्थाने 'ज्योतिषामहमंशुमान्' इति यवद्वीपपाठः, क्वचित् काश्मीरमातृकास्वपि ।

१०. २२ – '°वेदोऽस्मि' इतिस्थाने '°वेदोऽहं' इति प्रायः काश्मीरपाठः ।

१०. २२ – 'चेतना' इतिस्थाने 'चेतनाम्' इति पाठः ।

१०. २३ – '°श्चास्मि' इतिस्थाने '°श्चाहं' इति यवद्वीपपाठः ।

१०. २३ – '°रक्षसाम्' इतिस्थाने '°राक्षसाम्' इति प्रामादिकः पाठः ।

१०. २४ – 'पुरोधसां' इतिस्थाने 'पुरोधसं' इति, 'पुरोधानां' इति च पाठौ ।

१०. २४ – 'मुख्यं मां' इतिस्थाने 'मुख्यानां' इति, 'मां मुख्यं' इति च पाठौ ।

१०. २४ – 'सेनानीनामहं' इतिस्थाने 'सेनान्यामप्यहं' इति क्वचित् काश्मीरमातृकासु पाठः ।

१०. २४ – 'सागरः' इतिस्थाने 'सागरम्' इति पाठः ।

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

---

१०. २५ – '°मस्म्येक°' इतिस्थाने '°मप्येक°' इति कासुचित् काश्मीरमातृकासु पाठः । अन्यत्रापि क्वचित् ।

१०. २५ – '°यज्ञोऽस्मि' इतिस्थाने '°यज्ञोऽहं' इति प्रायः काश्मीरमातृकासु पाठः ।

१०. २५ – 'हिमालयः' इतिस्थाने 'हिमाचलः' इति पाठः । 'हिमालयम्' इत्यपि क्वचित् ।

१०. २७ – 'ऐरावतं' इतिस्थाने 'ऐरावणं' इति द्वित्रासु काश्मीरमातृकासु पाठः, 'ऐरावणो' इति तु यवद्वीपपाठः ।

१०. २७ – 'नराधिपम्' इतिस्थाने 'नराधिपः' इति यवद्वीपपाठः । अन्यत्रापि क्वचिदुपलभ्यते । 'नरोत्तमः' इत्यपि क्वचित् पाठः ।

१०. २८ – 'वज्रं' इतिस्थाने 'वज्रो' इति यवद्वीपपाठः, काश्मीरमातृकान्तरे च ।

१०. २८ – 'प्रजनश्चास्मि' इतिस्थाने 'प्रजानां चास्मि' इति, 'प्रजनस्यास्मि' इति, 'प्रजनेष्वपि' इति, 'पर्जन्यश्चास्मि' इति च पाठभेदाः ।

१०. २९ – '°श्चास्मि' इतिस्थाने '°श्चापि' इति पाठः ।

१०. २९ – 'संयमता°' इतिस्थाने 'संयमिना°' इति, 'संयच्छता°' इति च काश्मीरमातृकासु पाठौ ।

१०. ३० – 'प्रह्लादश्चास्मि दैत्यानां' इतिस्थाने 'प्रह्लादः सर्वदैत्यानां' इति यवद्वीपपाठः ।

१०. ३० – 'कलयता°' इतिस्थाने 'कालयता°' इति पाठः ।

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चाहं स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।

---

१०. ३१ – 'पवनः' इतिस्थाने 'पवनां' इति प्रामादिकः पाठः ।
१०. ३१ – 'पवता°' इतिस्थाने 'प्लवता°' इति बह्वीषु काश्मीरमातृकासु तथान्यत्रापि पाठः ।
१०. ३१ – 'रामः शस्त्रभृता°' इतिस्थाने 'रामाः शास्त्रधृता°' इत्येकस्यां मातृकायां पाठः ।
१०. ३१ – '°श्चाहं' इतिस्थाने '°श्चास्मि' इति बहुशः पाठः ।
१०. ३२ – 'सर्गाणां' इतिस्थाने 'स्वर्गाणां' इति पाठः ।
१०. ३२ – 'मध्यं' इतिस्थाने 'मध्यः' इति पाठः ।
१०. ३२ – 'अध्यात्मविद्या' इतिस्थाने 'आध्यात्मविद्या' इति, 'अध्यात्ममस्मि' इति च पाठौ ।
१०. ३२ – 'वादः' इतिस्थाने 'नादः' इति पाठः ।
१०. ३३ – 'द्वन्द्वः' इतिस्थाने 'द्वन्द्व°' इति पाठः ।
१०. ३३ – 'विश्वतोमुखः' इतिस्थाने 'विश्वतोमुखम्' इति, 'सर्वतोमुखः' इति च पाठौ ।
१०. ३४ – '°श्चाहमुद्भवश्च' इतिस्थाने '°श्चास्मि उद्भवश्च' इति नेपालपाठः । '°श्चाहमुद्भवस्य' इति तु प्रामादिकः ।
१०. ३४ – 'कीर्तिः श्रीर्वाक्' इतिस्थाने 'कीर्तिश्रीवाक्' इति, 'कीर्तिश्रीर्वाक्' इति च पाठौ ।
१०. ३४ – 'स्मृतिर्मेधा धृतिः' इतिस्थाने 'धृतिर्मेधा स्मृतिः' इति पाठः । 'स्मृतिर्मेधा धृति°' इति च ।
१०. ३५ – 'बृहत्साम तथा' इतिस्थाने 'बृहत्सामस्तथा' इति प्रामादिकः पाठः । 'बृहत्सामकथा' इत्यपि क्वचित् ।
१०, ३५ – 'गायत्री' इतिस्थाने 'गायत्रीं' इति पाठः ।

मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥ ३९ ॥

---

१०. ३५ – '°शीर्षोऽहमृतूनां' इतिस्थाने '°शीर्षोऽस्मि ऋतूनां' इति नेपालपाठः । '°शीर्षोऽहमृत्यूनां' इति क्वचित् प्रामादिकः पाठः ।

१०. ३६ – 'छलयता°' इतिस्थाने 'छलवता°' इति पाठः । 'चलयता°' इति क्वचित् ।

१०. ३६ [*१] – नेपालपाठेऽत्राधिकः श्लोको यथा—

'ओषधीनां यवश्चास्मि धातूनामस्मि काञ्चनम् ।
सर्वेषां तृणजातीनां दर्भोऽहं पाण्डुनन्दन ॥'

यवद्वीपपाठे त्वयमेव श्लोकः ३७ श्लोकानन्तरं पठ्यते । किंतु तत्रास्य प्रथम एव पादः 'यवश्चाहं' इति पाठान्तरयुतो दृश्यते । अयं श्लोकोऽन्यस्यां मातृकायामपि ३८ श्लोकानन्तरं पठ्यते ।

१०. ३७ – '°मप्यहं' इतिस्थाने '°मस्म्यहं' इति पाठः ।

१०. ३७ – 'उशना' इतिस्थाने 'उशनाः' इति पाठः ।

१०. ३७ – 'कविः' इतिस्थाने 'कलिः(!)' इति पाठः ।

१०. ३८ – 'दमयता°' इतिस्थाने 'दमयिता°' इति पाठः ।

१०. ३८ – 'नीतिरस्मि' इतिस्थाने 'नीतिरश्मि°' इति पाठः ।

१०. ३८ – 'जिगीषताम्' इतिस्थाने 'जिहीषताम्' इति, 'जिगीर्षताम्' इति, 'जिगीषिताम्' इति च पाठाः ।

१०. ३८ – 'ज्ञानवतां' इतिस्थाने 'ज्ञानमतां' इति पाठः ।

१०. ३९ – 'यच्चापि' इतिस्थाने 'यच्चास्ति' इति पाठः । 'मच्चापि' इति तु प्रामादिकः ।

१०. ३९ – 'बीजं तदह°' इतिस्थाने 'तद्बीजमह°' इति पाठः ।

१०, ३९ – 'तदस्ति' इतिस्थाने 'तदस्मि' इति पाठः ।

१०. ३९ – 'यत् स्यान्मया' इतिस्थाने 'यः स्याद्भाव°' इति, 'यस्मान्मया' इति, 'यत् स्यान्माया' इति च पाठाः । 'यत् स्यान्मम' इति पाठस्तु आनन्दवर्धनटीकायाम् ।

१०. ३९ – 'चराचरम्' इतिस्थाने 'सचराचरम्' इति पाठः ।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

---

१०. ४० – 'नान्तोऽस्ति' इतिस्थाने 'नान्तोऽस्मि' इति पाठः ।
१०. ४० – 'मम' इतिस्थाने 'शुभ°' इति पाठः ।
१०. ४० – 'दिव्यानां' इतिस्थाने 'विद्यानां' इति यवद्वीपपाठः ।
१०. ४० – 'परंतप' इतिस्थाने 'परंतपः' इति पाठः ।
१०. ४० – 'प्रोक्तो' इतिस्थाने 'प्राप्तो' इति पाठः ।
१०. ४० – 'विभूतेर्विस्तरो' इतिस्थाने 'विभूतिविस्तरो' इति पाठः ।
१०. ४१ – 'यद्य°' इतिस्थाने 'यत्त°' इति पाठः ।
१०. ४१ – 'मेव वा' इतिस्थाने 'मेव च' इति पाठः ।
१०. ४१ – '°वावगच्छ त्वं' इतिस्थाने '°वावगच्छेस्त्वं' इति प्रायः काश्मीरपाठः ।
१०. ४१ – '°संभवम्' इतिस्थाने '°संभवः' इति पाठः ।
१०. ४२ – '°नैतेन' इतिस्थाने '°नोक्तेन' इति पाठः । क्वचन काश्मीरमातृकासु '°नैकेन' इत्यपि पाठः ।
१०. ४२ – 'ज्ञातेन' इतिस्थाने 'ज्ञानेन' इति बह्वीषु काश्मीरादिमातृकासु पाठः । 'उक्तेन' इति तु यवद्वीपपाठः ।
१०. ४२ – 'स्थितो जगत्' इतिस्थाने 'जगत् स्थितः' इति पाठः ।
१०. पुष्पिकायाम् – 'विभूतियोगो' इतिस्थाने 'विभूतिविस्तरो' इति, 'विभूतिविस्तरयोगो' इति, 'विभूतिपुरुषयोगो' इति, 'महापुरुषविभूतियोगो' इति, 'शुभदिव्यविभूतियोगो' इति च पाठान्तराणि ।

## ॥ अथ एकादशोऽध्यायः ॥

अर्जुन उवाच ।

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

---

११. १ – '°संज्ञितम्' इतिस्थाने '°संज्ञिकम्' इति पाठः ।

११. १ – 'यत् त्वयो°' इतिस्थाने 'यस्त्वयो°' इति प्रामादिकः पाठः ।

११. २ – '°प्ययौ' इतिस्थाने '°त्ययौ' इति कासुचित् काश्मीरमातृकासु पाठः । '°व्ययौ' इत्यन्यत्र ।

११. २ – 'श्रुतौ' इतिस्थाने 'श्रुतो' इति प्रामादिकः पाठः ।

११. २ – 'विस्तरशो' इतिस्थाने 'विस्तरतो' इति पाठः ।

११. २ – 'माहात्म्य°' इतिस्थाने 'महात्म्य°' इति प्रामादिकः पाठः ।

११. ३ – '°द्यथात्थ त्व°' इतिस्थाने '°द्यथातत्त्व°' इति, '°द्यथार्थं त्व°' इति च पाठौ ।

११. ३ – 'परमेश्वर' इतिस्थाने 'परमेश्वरम्' इति पाठो बह्वीषु मातृकासु । 'पुरुषोत्तम' इति त्वन्यत्र ।

११. ३ – '°मिच्छामि ते' इतिस्थाने '°मिच्छाम्यहं' इति पाठः ।

११. ३ – '°मैश्वरं' इतिस्थाने '°मैश्वर्यं' इति पाठः ।

११. ३ – 'पुरुषोत्तम' इतिस्थाने 'परमेश्वर' इति पाठः ।, 'पुरुषोत्तमम्' इति च ।

११. ४ – '°मिति' इतिस्थाने '°मिह' इति पाठः ।

११. ४ – 'योगेश्वर' इतिस्थाने 'योगीश्वर' इति प्रायः काश्मीरपाठः ।

११. ४ – 'दर्शया°' इतिस्थाने 'धर्षया°' इति प्रामादिकः पाठः ।

श्रीभगवानुवाच ।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥

इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

---

११. ५ – 'शतशोऽथ' इतिस्थाने 'शतशो वा' इति यवद्वीपपाठः ।

११. ५ – 'दिव्यानि' इतिस्थाने 'रूपाणि' इति पाठः ।

११. ५ – '°वर्णाकृतीनि' इतिस्थाने '°वर्णकृतीनि' इति, '°वर्णाकृतानि' इति च पाठौ ।

११. ६ – 'रुद्रान°' इतिस्थाने 'रुद्रा अ°' इति पाठः ।

११. ६ – '°न्यदृष्टपूर्वाणि' इतिस्थाने '°न्यदृष्टरूपाणि' इति पाठः । '°न्यपूर्वरूपाणि' इति, '°न्यपूर्वपुण्यानि' इति च क्वचित् पाठौ ।

११. ६ – 'भारत' इतिस्थाने 'पाण्डव' इति बह्वीषु काश्मीरमातृकासु पाठः ।

११. ७ – 'कृत्स्नं' इतिस्थाने 'सर्वं' इति पाठः ।

११. ७ – 'पश्याद्य' इतिस्थाने 'पश्यादि' इति पाठः ।

११. ७ – '°न्यद्द्रष्टु°' इतिस्थाने '°न्यं द्रष्टु°' इति पाठः ।

११. ८ – 'न तु' इतिस्थाने 'न च' इति, 'न नु' इति च पाठौ ।

११. ८ – 'शक्यसे' इतिस्थाने 'शक्ष्यसि' इति रामानुजपाठः, प्रायः द्राविडपाठश्च । काश्मीरपुस्तकान्तरेऽप्युपलभ्यते । मातृकान्तरेषु तु 'शक्यसि' इति, 'शक्यते' इति च पाठौ ।

११. ८ – 'द्रष्टुमनेनैव' इतिस्थाने 'द्रष्टुमेतेनैव' इति, 'द्रष्टुमनो नैव' इति च पाठौ ।

११. ८ – 'स्वचक्षुषा' इतिस्थाने 'सुचक्षुषा' इति पाठः । 'च चक्षुषा' इत्यपि क्वचित् ।

११. ८ – 'ददामि' इतिस्थाने 'ददानि' इति पाठः ।

११. ८ – 'चक्षुः' इतिस्थाने 'रूपं' इति पाठः ।

११. ८ – 'योग°' इतिस्थाने 'रूप°' इति पाठः ।

संजय उवाच ।

एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

---

११. ९ – '°मुक्त्वा ततो राजन्' इतिस्थाने '°मुक्त्वाग्रतो राजन्' इति, '°मुक्त्वा महाराज' इति च पाठौ ।

११. ९ – 'योगेश्वरो' इतिस्थाने 'योगीश्वरो' इति प्रायः काश्मीरपाठः ।

११. १० – '°काद्भुत°' इतिस्थाने '°कोद्भूत°' इति पाठः ।

११. १० – 'दिव्यानेकोद्यता°' इतिस्थाने 'दिव्यानीकोद्यता°' इति 'दिव्यानेकोद्युता°' इति च पाठौ ।

११. ११ – '°माल्याम्बर' इतिस्थाने '°मालाम्बर°' इति प्रायः काश्मीरपाठः ।

११. ११ – 'देव°' इतिस्थाने 'विष्णु°' इत्येकस्यां काश्मीरमातृकायां पाठः ।

११. १२ – 'दिवि' इतिस्थाने 'दिव्य' इति पाठः ।

११. १२ – '°दुत्थिता' इतिस्थाने '°दुत्थिताः' इति पाठः ।

११. १२ – 'भाः' इतिस्थाने 'भा' इति पाठः ।

११. १२ – 'सा स्या°' इतिस्थाने 'सूर्या°' इति पाठः ।

११. १३ – 'तत्रैकस्थं' इतिस्थाने 'तत्रैवस्थं' इति पाठः ।

११. १३ – '°स्तदा' इतिस्थाने '°स्तथा' इति पाठः ।

११. १४ – '°रोमा' इतिस्थाने '°रोगा' इति प्रामादिकः पाठः ।

११. १४ – 'देवं' इतिस्थाने 'विष्णुं' इत्येकस्यां काश्मीरमातृकायां पाठः ।

अर्जुन उवाच।

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान्।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वा सर्वतोऽनन्तरूपम्।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम्।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम्।

---

११. १५ – '°विशेषसङ्घान्' इतिस्थाने '°विशेषसङ्गान्' इति, '°मशेषसङ्घान्' इति, 'अशेषसङ्घान्' इति च पाठाः।

११. १५ – 'दिव्यान्' इतिस्थाने 'दीप्तान्' इति रामानुजीयपाठः कासुचित् काश्मीर-मातृकास्वपि दृश्यते। 'सङ्घान्' इत्यन्यत्र।

११. १६ – 'त्वा' इतिस्थाने 'त्वां' इति बह्वीषु मातृकासु पाठः।

११. १६ – 'तवादिं' इतिस्थाने 'तवाद्यं' इति, 'तथादिं' इति, 'तथाद्यं' इति च पाठाः।

११. १६ – 'विश्वेश्वर' इतिस्थाने 'सर्वेश्वर' इति पाठः।

११. १६ – 'विश्वरूप' इतिस्थाने 'विश्वरूपं' इति बह्वीषु मातृकासु पाठः। 'विश्वमूर्ते' इति च क्वचित्।

११. १७ – 'त्वां' इतिस्थाने 'त्वा' इति पाठः।

११. १७ – 'दुर्निरीक्ष्यं समन्ताद्°' इतिस्थाने 'दुर्निरीक्षं समन्ताद्' इति पाठः। 'सर्वतो दीप्तिमन्तं' इति च मातृकान्तरे।

११. १८ – 'निधानम्' इतिस्थाने 'निदानम्' इति पाठः।

त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तवेदं
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

अमी हि त्वा सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वा स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

---

११. १८ – 'शाश्वतधर्म°' इतिस्थाने 'सात्वतधर्म°' इति काश्मीरमातृकासु तट्टीकासु च प्रायः स्वीकृतो पाठः । 'शश्वतधर्म°' इति तु प्रामादिकः ।

११. १८ – 'पुरुषो' इतिस्थाने 'पुरुषं' इति प्रामादिकः पाठः ।

११. १९ – '°मध्यान्तमनन्त°' इतिस्थाने '°मध्यान्तविहीन°' इति पाठः ।

११. १९ – '°नेत्रम्' इतिस्थाने '°नेत्र' इति पाठः ।

११. १९ – 'त्वां' इतिस्थाने 'त्वा' इति काश्मीरद्राविडदाक्षिणात्यमातृकासु प्रायः पाठः ।

११. १९ – 'विश्वमिदं तपन्तम्' इतिस्थाने 'विश्वमनन्तरूपम्' इति पाठः ।

११. २० – 'व्याप्तं त्वयै°' इतिस्थाने 'व्याप्तास्त्वयै°' इति पाठः ।

११. २० – 'रूपमुग्रं तवेदं' इतिस्थाने 'रूपमिदं तवोग्रं' इति, प्रायो वङ्गीयपाठः, 'रूपमिदं तवेदृग्°' इति प्रायः काश्मीरपाठः । 'रूपमुदग्ररूपं' इति, 'रूपमुग्रं तदेवं' इति च क्वचित् ।

११. २१ – 'त्वा सुरसङ्घा' इतिस्थाने 'त्वां सुरसङ्घा' इति बह्वीषु मातृकासु । अन्यत्र तु 'त्वासुरसङ्घा' इति ससंधिकः पाठः स्वीकृतः ।

११. २१ – 'गृणन्ति' इतिस्थाने 'घृणन्ति' इति प्रामादिकः पाठः ।

११. २१ – 'स्वस्तीत्युक्त्वा महर्षिसिद्ध°' इतिस्थाने '°स्वस्तीति चोक्त्वैव महर्षि°' इति काश्मीरपाठः । 'स्वस्तीति चोक्त्वा महर्षिसिद्ध°' इत्यन्यत्र ।

११. २१ – 'स्तुवन्ति त्वा' इतिस्थाने 'स्तुवन्ति त्वां' इति बह्वीषु काश्मीरादिमातृकासु पाठः ।

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वा विस्मिताश्चैव सर्वे ॥ २२ ॥

रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानिलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

---

११. २२ – '°यक्षा°' इतिस्थाने '°यक्षाः' इति क्वचित् पाठः ।
११. २२ – 'वीक्षन्ते त्वा' इतिस्थाने 'वीक्षन्ते त्वां' इति काश्मीरादिबह्वीषु मातृकासु पाठः । क्वचित् 'वीक्षन्ति त्वां' इत्यपि । 'वीक्ष्यन्ते त्वां' इति तु प्रामादिकः ।
११. २२ – 'विस्मिताश्चैव' इतिस्थाने 'विस्मिता एव' इति पाठः ।
११. २३ – '°स्तथाहम्' इतिस्थाने '°स्तदाहम्' इति पाठः ।
११. २४ – 'नभःस्पृशं' इतिस्थाने 'नभस्पृशं' इति पाठः ।
११. २४ – '°वर्णं' इतिस्थाने '°वक्त्रं' इति पाठः ।
११. २४ – 'व्यात्ताननं' इतिस्थाने 'व्याप्ताननं' इति पाठः ।
११. २४ – 'त्वां' इतिस्थाने 'त्वा' इति काश्मीरादिबह्वीषु मातृकासु पाठः ।
११. २४ – 'शमं' इतिस्थाने 'शमे' इति पाठः ।
११. २४ – 'विष्णो' इतिस्थाने 'विष्णोः' इति पाठः ।
११. २५ – 'दृष्ट्वैव' इतिस्थाने 'दृष्ट्वेव' इति पाठः ।
११. २५ – 'देवेश' इतिस्थाने 'देवीश' इति पाठः ।

अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

वक्त्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।

---

११. २६ – 'च त्वां' इतिस्थाने 'च त्वा' इति बह्वीषु द्राविडदाक्षिणात्यमातृकासु पाठः । 'हि त्वां' इति च क्वचित् । 'सर्वे' इति प्रायः काश्मीरपाठः ।

११. २६ – 'सर्वे' इतिस्थाने 'सर्वैः' इति प्रायः काश्मीरपाठः ।

११. २६ – '°वावनि°' इतिस्थाने '°वानिल°' इति पाठः ।

११. २६ – 'योध°' इतिस्थाने 'यौध°' इति पाठः ।

११. २७ – '°द्विलग्ना' इतिस्थाने '°द्विमग्ना' इति पाठः । '°द्विलग्नो' इति तु प्रामादिकः ।

११. २७ – '°न्तरेषु' इतिस्थाने '°न्तराले' इति पाठः ।

११. २७ – '°दृश्यन्ते' इतिस्थाने '°दृश्यते' इति प्रामादिकः पाठः ।

११. २७ पू(*१/२) – 'सहस्रसूर्यात[प]संनिभानि
तथा जगद्भासकृतक्षणानि ।'
इत्यधिकः श्लोकार्धः एकस्यां काश्मीरमातृकायाम् ।

११. २७ पू(*१ १/२) – 'नानारूपैः पुरुषैर्बोध्यमाना (पा. भे., बांध्यमाना, वंध्यमाना)
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः
शस्त्रैः कृत्ता विविधैः सर्व एव ॥'
'त्वत्तेजसा निहता(पा., भिहता, निहिता) नूनमेते(पा., मेव)
तथा हीमे त्वच्छरीरं (पा. भे., च्छरीरे, च्छरीर)प्रविष्टाः ।'
इत्यधिकः सार्धश्लोकः प्रायः सर्वासु काश्मीरमातृकासु ।

११. २८ – 'द्रवन्ति' इतिस्थाने 'विशन्ति' इति, 'व्रजन्ति' इति च पाठौ ।

तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान् समग्रान् वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत् समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद।

---

११. २८ – 'तथा तवामी नरलोकवीरा' इतिस्थाने 'तथा तवामी नरदेवलोका' इति पाठः। 'तथामी नरनाथलोकवीरा' इति यवद्वीपपाठः।

११. २८ – 'वक्त्राण्यभिविज्वलन्ति' इतिस्थाने 'वक्त्राण्यभितो ज्वलन्ति' इति प्रायः काश्मीरपाठो वङ्गीयपाठश्च। 'वक्त्राणि समृद्धवेगाः' इत्यपि क्वचित् पाठः। 'वक्त्राण्यभितो द्रवन्ति' इति यवद्वीपपाठः।

११. २९ – 'प्रदीप्तं' इतिस्थाने 'प्रदीप्त°' इति पाठः।

११. २९ – 'विशन्ति नाशाय समृद्धवेगाः' इतिस्थाने 'शान्तिं च नाशं च यमाभिभूताः' इति यवद्वीपपाठः। 'विशन्ति नाशाय समिद्धवेगाः' इति त्वन्यत्र।

११. २९ – 'नाशाय विशन्ति' इतिस्थाने 'भस्माङ्गमयन्ति' इति यवद्वीपपाठः।

११. २९ – 'वक्त्राणि समृद्ध°' इतिस्थाने 'वक्त्राणि समिद्ध°' इति पाठः। तथा 'वक्त्राणि समृद्धि°' इत्यपि।

११. ३० – 'समग्रान्' इतिस्थाने 'समस्तान्' इति, 'समग्रैर्' इति च पाठौ।

११. ३० – 'प्रतपन्ति' इतिस्थाने 'प्रपतन्ति' इति कासुचित् काश्मीरमातृकासु पाठः।

११. ३० – 'विष्णो' इतिस्थाने 'विष्णोः' इति प्रायः काश्मीरपाठः। अन्यत्रापि दृश्यते।

११. ३१ – 'आख्याहि' इतिस्थाने 'आख्याय' इति पाठः।

११. ३१ – 'भवा°' इतिस्थाने 'भगवा°' इति पाठः।

११. ३१ – 'ते देववर' इतिस्थाने 'देवेशवर' इति पाठः।

विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥

श्रीभगवानुवाच ।

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान् समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।

---

११. ३१ – 'विज्ञातु°' इतिस्थाने 'विज्ञात°' इति पाठः ।

११. ३१ – 'न हि' इतिस्थाने 'न च' इति पाठः ।

११. ३२ – 'लोकक्षय°' इतिस्थाने 'लोके क्षय°' इति पाठः ।

११. ३२ – 'प्रवृद्धो लोकान्' इतिस्थाने 'प्रवृद्धाँल्लोकान्' इति प्रायः काश्मीरपाठः ।

११. ३२ – '°मिह' इतिस्थाने '°मितः' इति पाठः । '°महं' इति तु यवद्वीपपाठः ।

११. ३२ – 'ऋतेऽपि त्वा' इतिस्थाने 'ऋतेऽपि त्वां' इति वङ्गीयादिमातृकासु पाठः। 'ऋते त्वदेते' इति तु क्वचित् ।

११. ३२ – 'भविष्यन्ति' इतिस्थाने 'भवन्ति' इति पाठः ।

११. ३२ – 'योधाः' इतिस्थाने 'यौधाः' इति पाठः ।

११. ३३ – 'लभस्व' इतिस्थाने 'भजस्व' इति पाठः ।

११. ३३ – 'मयैवैते' इतिस्थाने 'मयैव ते' इति, 'मयैवैता' इति च पाठौ ।

११. ३३ – 'निहताः' इतिस्थाने 'निहिताः' इति पाठः ।

११. ३३ – 'पूर्वमेव' इतिस्थाने 'सर्वमेव' इति पाठः ।

११. ३४ – 'योधवीरान्' इतिस्थाने 'योधमुख्यान्' इति कासुचित् मातृकासु पाठः, 'लोकवीरान्' इति प्रायः काश्मीरपाठः, तथा 'वीर योधान्' इत्यपि । 'यौधवीरान्' इति तु कासुचिद्द्राविडदाक्षिणात्यमातृकासु दृश्यते ।

मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥

संजय उवाच ।

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

अर्जुन उवाच ।

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥

कस्माच्च ते न नमेरन् महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत् तत्परं यत् ॥ ३७ ॥

---

११. ३४ – 'हतांस्त्वं' इतिस्थाने 'हतास्त्वं' इति पाठः ।
११. ३४ – 'व्यथिष्ठा' इतिस्थाने 'व्यतिष्ठा' इति पाठः ।
११. ३६ – '°रज्यते' इतिस्थाने '°रञ्ज्यते' इति पाठः ।
११. ३६ – 'भीतानि' इतिस्थाने 'भूतानि' इति पाठः ।
११. ३७ – 'नमेरन्' इतिस्थाने 'नमेयुर्' इति रामकविपाठः काश्मीरमातृकान्तरेऽपि दृश्यते ।
११. ३७ – '°ऽप्यादि°' इतिस्थाने 'ह्यादि°' इति पाठः ।
११. ३७ – 'अनन्त' इतिस्थाने 'प्रसीद' इति पाठः ।
११. ३७ – 'सदसत् तत्परं यत्' इतिस्थाने 'सदसत्तः परं यत्' इति, 'सदसतोः परं यत्' इति, 'सदसत् तत्परं च' इति च पाठाः ।

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥

नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥

---

११. ३८ – 'च परं च' इतिस्थाने 'परमं च' इति पाठः ।

११. ३८ – '°मनन्तरूप' इतिस्थाने '°मनन्तरूपम्' इति कासुचित् मातृकासु तथा रामकविटीकायां पाठः । '°मिदं समस्तम्' इति, '°मनन्तमाद्यम्' इति च पाठान्तरे ।

११. ३९ पू(*१) – 'अनादिमानप्रतिमप्रभावः
सर्वेश्वरः सर्वमहाविभूतिः (पा. भे., °विभूते) ।
न हि त्वदन्यः कश्चिदस्तीह (पा. भे., °दपीह) देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा ॥'

इत्यधिकः श्लोको नारायणार्यैः पठ्यत इति तात्पर्यचन्द्रिका । काश्मीरपाठे तु प्रायः श्लोकस्यास्य पूर्वार्धं एवात्राधिको दृश्यते, उत्तरार्धस्तु ४० श्लोकपूर्वार्धानन्तरं पठ्यते ।

११. ४० – 'पृष्ठतस्ते' इतिस्थाने 'पृष्ठतश्च' इति पाठः ।

११. ४० – 'सर्व' इतिस्थाने 'सर्वे' इति, 'सर्वः' इति च पाठौ । 'काले' इति तु यवद्वीपपाठः ।

११. ४० – '°वीर्या°' इतिस्थाने '°वीर्योऽ°' इति प्रायः काश्मीरपाठः । '°वीर्यामृत°' इत्यपि क्वचित् ।

११. ४० – 'सर्वं समाप्नोषि' इतिस्थाने 'व्याप्नोषि सर्वं च' इति, 'सर्वं संव्याप्नोषि' इति च पाठभेदौ ।

११. ४० – 'ततोऽसि' इतिस्थाने 'ततोऽपि' इति पाठः ।

११. ४० – 'सर्वः' इतिस्थाने 'सर्वम्' इति पाठः ।

सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात् प्रणयेन वापि ॥ ४१ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत् समक्षं
तत् क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥

पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।

---

११. ४१ – 'यदुक्तं' इतिस्थाने 'यदुक्तो' इति पाठः । 'यथोक्तं' इत्यपि क्वचित् ।

११. ४१ – 'हे सखेति' इतिस्थाने 'हे सखे च' इति कासुचित् काश्मीरटीकासु । 'हे सखेति च' इति चान्यत्र ।

११. ४१ – 'अजानता°' इतिस्थाने 'अजानतो' इति पाठः ।

११. ४१ – 'तवेदं' इतिस्थाने 'तवेमं' इति शाङ्करभाष्ये निर्दिष्टः पाठभेदः । दृश्यते चायं काश्मीरादिवह्वीषु मातृकासु ।

११. ४१ – 'प्रणयेन' इतिस्थाने 'प्रणवेन' इति पाठः ।

११. ४१ – 'वापि' इतिस्थाने 'चापि' इति पाठः ।

११. ४२ – 'यच्चावहासा°' इतिस्थाने 'यच्चापहासा°' इति वह्वीषु दाक्षिणात्यमातृकासु पाठः ।

११. ४२ – '°मसत्कृतोऽसि' इतिस्थाने '°मसत्कृतोऽपि' इति पाठः । '°नमस्कृतोऽसि' इत्यपि क्वचित् ।

११. ४२ – 'तत् समक्षं' इतिस्थाने 'तत्समक्षं' इति, 'मत्समक्षं' इति, 'सत्समक्षं' इति च ससमासाः प्रायः पाठाः ।

११. ४२ – 'क्षामये' इतिस्थाने 'कामये' इति पाठः ।

११. ४२ – '°मप्रमेयम्' इतिस्थाने '°मीशमीड्यम्' इति पाठः । '°मप्रमेय' इति च क्वचित् ।

११. ४३ – 'पितासि' इतिस्थाने 'पितास्य' इति, 'पिता हि' इति च पाठौ ।

११. ४३ – 'त्वमस्य' इतिस्थाने 'त्वमद्य' इति पाठः ।

११. ४३ – 'पूज्यश्च' इतिस्थाने 'पूर्वश्च' इति पाठः । 'विश्वस्य' इति तु द्वित्रासु काश्मीरमातृकासु ।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥

तस्मात् प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

---

११. ४३ – '°ऽस्त्यभ्यधिकः' इतिस्थाने '°स्त्यप्यधिकः' इति, 'स्त्यभ्यधिकं' इति, '°ऽस्त्यधिकः' इति च पाठाः ।

११. ४३ – 'कुतोऽन्यो' इतिस्थाने 'कुतो नु' इति पाठः ।

११. ४३ – '°प्रभाव' इतिस्थाने '°प्रभावः' इति प्रायः काश्मीरपाठः, क्वचिदन्यत्राप्युपलभ्यते । '°स्वभाव' इत्यपि क्वचित् ।

११. ४४ – 'कायं' इतिस्थाने 'कामं' इति पाठः ।

११. ४४ – '°मीशमीड्यम्' इतिस्थाने '°मप्रमेयम्' इति पाठः ।

११. ४४ – 'प्रियायार्हसि' इतिस्थाने 'प्रियस्यार्हसि' इति काश्मीरपाठः । 'प्रियाया इव' इति त्वन्यत्र क्वचित् ।

११. ४४ – 'देव सोढुम्' इतिस्थाने 'सोढुमर्हन्' इति क्वचित् काश्मीरमातृकासु पाठः ।

११. ४४ (*१) – 'दिव्यानि कर्माणि तवाद्भुतानि
पूर्वाणि पूर्वे ऋ(पा., र्वेऽप्यृ, र्वा ऋ)षयः स्मर(पा., यो वद्)न्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ॥'

११. ४४ (*२) – 'तवाद्भुतं किं नु (पा. भे., न) भवेदसह्यं
किं वाशक्यं परतः (पा. भे., पुरतः) कीर्तयिष्ये ।
कर्तासि सर्वस्य (पा. भे., लोकस्य) यतः स्वयं वै(पा. भे., विभो)
विभो ततः सर्वमिदं (पा. भे., ततो जगत् कृत्स्नमिदं, 'त्वत्तः सर्वं त्वयि सर्वं) त्वमेव ॥'

११. ४४ (*३) – 'अत्यद्भुतं कर्म न दुष्करं ते
कर्मोपमानं (पा. भे., कर्मोन्मानं) न हि (पा. भे., च) विद्यते ते ।
न ते गुणानां परिमाणमस्ति
न तेजसो (पा., तेजसां) नापि बलस्य नर्द्धेः (पा., नत्स्वे, ऋद्धेः) ॥'

इति त्रयः श्लोका अधिकाः काश्मीरपाठे । नेपालपाठे तु प्रथमपूर्वार्धतृतीयोत्तरार्धात्मक एक एव श्लोकोऽधिको वर्तते, यत्र पाठभेदाः यथा – 'दिव्यानि' इतिस्थाने 'इमानि' इति, 'पूर्णानि' इतिस्थाने 'कृतानि' इति, 'ऋषयः स्मरन्ति' इतिस्थाने 'मुनयो वदन्ति' इति; तथा 'तेजसो नापि' इतिस्थाने 'तेजसश्चापि' इति 'नर्द्धेः' इतिस्थाने 'विष्णो' इति च । एते श्लोकाः नारायणार्यैरधिकं लिखिता इति ११. २७ श्लोके तात्पर्यचन्द्रिका ।

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ४५ ॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥

श्रीभगवानुवाच ।

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥

---

११. ४५ – 'देव रूपं' इतिस्थाने 'दिव्यरूपं' इति पाठः ।

११. ४६ – 'त्वां' इतिस्थाने 'त्वा' इति बह्वीषु मातृकासु पाठः ।

११. ४६ – '॰महं तथैव' इतिस्थाने '॰मनन्तरूप' इति क्वचित् पाठः ।

११. ४६ – 'चतुर्भुजेन' इतिस्थाने 'भुजद्वयेन' इत्येकस्यां पुरातनकाश्मीरमातृकायां पाठः ।

११. ४७ – 'यन्मे' इतिस्थाने 'यं मे' इति प्रामादिकः पाठः ।

११. ४८ – '॰ध्ययनै॰' इतिस्थाने '॰धिगमै॰' इति काश्मीरपाठः ।

११. ४८ – 'एवंरूपः शक्य अहं नृलोके द्रष्टुं' इतिस्थाने 'एवंरूपं शक्यते मां त्रिलोके-द्रष्टुं' इति, 'एवंरूपः शक्य अहं त्रिलोके द्रष्टुं' इति, 'एवंरूपः शक्यमहं नृलोके द्रष्टुं' इति, 'एवंरूपः शक्यमहं न लोके द्रष्टुं' इति, 'एवंरूपः शक्योऽहं नृलोके द्रष्टुं' इति, 'एवंरूपो द्रष्टुमहं नृलोके शक्यं' इति, 'एवंरूपः शक्यस्त्वहं नृलोके द्रष्टुं' इति, 'एवंरूपः शक्यतेऽहं नृलोके द्रष्टुं' इति, 'एवं-रूपः शक्य अहं नृलोके दृष्टं' इति च विविधाः पाठभेदाः दृश्यन्ते ।

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥

संजय उवाच ।

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

अर्जुन उवाच ।

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥

श्रीभगवानुवाच ।

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

---

११. ४९ – 'विमूढभावो' इतिस्थाने 'विमूढता भूद्' इति प्रायः काश्मीरपाठः ।
११. ४९ – '°मीदृङ्ममेदम्' इतिस्थाने '°मुग्रं ममेदम्' इति क्वचन- काश्मीरमातृकासु पाठः ।
११. ५० – 'सौम्य°' इतिस्थाने 'सोम्य°' इति पाठः । 'काम्य°' इति च क्वचित् ।
११. ५१ – 'सौम्यं' इतिस्थाने 'सोम्य' इति पाठः ।
११. ५२ – 'सुदुर्दर्शं°' इतिस्थाने 'दुर्दर्शन°' इति पाठः । 'सुदर्शन°' इत्यपि क्वचित् पाठः ।
११. ५२ – 'नित्यं दर्शन°' इतिस्थाने 'नित्यदर्शन°' इति, 'नित्यं वन्दन°' इति च पाठौ ।
११. ५३ – 'वेदैर्न' इतिस्थाने 'देवैर्न' इति यवद्वीपपाठः ।
११. ५३ – 'दानेन न' इतिस्थाने 'दानैर्न' इति पाठः ।
११. ५३ – 'द्रष्टुं' इतिस्थाने 'दृष्टं' इति पाठः ।
११. ५३ – 'मां यथा' इतिस्थाने 'मां तथा' इति पाठः । 'ये यथा' इति, 'यन्मम' इत्यपि क्वचित् ।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
**विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥**

---

**११. ५४** – 'त्वनन्यया' इतिस्थाने 'त्वनन्यथा' इति पाठः ।

**११. ५४** – 'शक्य अह°' इतिस्थाने 'शक्यो ह्यह°' इति प्रायः काश्मीरपाठः । 'शक्यमह°' इति तु नेपालपाठः । 'शक्यस्त्वह°' इति च क्वचित् ।

**११. ५५** – 'मद्भक्तः' इतिस्थाने 'मद्भावात्' इति यवद्वीपपाठः ।

**११. पुष्पिकायाम्** – 'विश्वरूपदर्शनं' इतिस्थाने 'विश्वरूपदर्शनो' इति, 'विश्वरूपदर्शनयोगो' इति, 'विश्वरूपप्रदर्शनं' इति, 'श्रीकृष्णविश्वरूपदर्शनो' इति, 'भगवद्विश्वरूपदर्शनयोगो' इति, 'विभूतियोगविश्वरूपं' इति च पाठाः ।

## ॥ अथ द्वादशोऽध्यायः ॥

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

श्रीभगवानुवाच ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥

संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

---

१२. १ – 'भक्तास्त्वां' इतिस्थाने 'भक्त्या त्वां' इति पाठः ।

१२. १ – 'ये चाप्यक्षर°' इतिस्थाने 'ये वाप्यक्षर°' इति, 'ये चापि क्षर°' इति च पाठौ ।

१२. १ – 'के योगवित्तमाः' इतिस्थाने 'को योगवित्तमः' इति पाठः ।

१२. २ – 'युक्ततमा' इतिस्थाने 'युक्ताः समा' इति पाठः ।

१२. ३ – 'पर्युपासते' इतिस्थाने 'मामुपासते' इति क्वचित् काश्मीरपाठः ।

१२. ३ – 'सर्वत्रगम°' इतिस्थाने 'सर्वत्रागम°' इति पाठः ।

१२. ४ – 'मामेव' इतिस्थाने 'मामेवं' इति पाठः ।

१२. ५ – '°स्तेषामव्यक्तासक्त°' इतिस्थाने '°स्तेषां सर्वत्राव्यक्त°' इति क्वचित् काश्मीरमातृकासु पाठः ।

१२. ५ – 'देहवद्भि°' इतिस्थाने 'देहभृद्भि°' इति प्रायः काश्मीरपाठः ।

१२. ६ – 'सर्वाणि कर्माणि' इतिस्थाने 'कर्माणि सर्वाणि' इति पाठः ।

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

---

१२. ७ – 'मृत्युसंसार°' इतिस्थाने 'मृत्युः संसार°' इति पाठः ।
१२. ७ – 'मय्यावेशित°' इतिस्थाने 'मयावेशित°' इति पाठः ।
१२. ८ – 'मन आधत्स्व' इतिस्थाने 'मनः संधत्स्व' इति यवद्वीपपाठः ।
१२. ८ – 'निवसिष्यसि' इतिस्थाने 'निवत्स्यसि त्वं' इति प्रायः काश्मीरपाठः । 'विवत्स्यसि त्वं' इति त्वानन्दवर्धनपाठः ।
१२. ८ – 'अत ऊर्ध्वं न संशयः' इतिस्थाने 'अत ऊर्ध्वं धनंजय' इति क्वचित् पाठः । 'योगमुत्तममास्थितः' इति तु प्रायः काश्मीरपाठः ।
१२. ९ – 'अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्' इतिस्थाने 'अथ चित्तं समाधातुं न शक्नोषि मयि स्थितम्' इति, 'अथ चित्तं समाधातुमशक्नोषि मयि स्थिरम्' इति च क्वचित् पाठः । 'अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम्' इति प्रायः काश्मीरपाठः । 'अथावेशयितुं चित्तं मयि शक्नोषि न स्थिरम्' इत्यपि क्वचित् ।
१२. ९ – 'मामिच्छाप्तुं' इतिस्थाने 'मामिहाप्तुं' इति पाठः ।
१२. १० – '°प्यसमर्थोऽसि' इतिस्थाने '°प्यसमर्थो हि' इति क्वचित् पाठः । '°प्यसमर्थः सन्' इति प्रायः काश्मीरपाठः, '°प्यसमर्थस्त्वं' इति त्वानन्दवर्धनसंमतः । 'तु समर्थोऽसि' इति, '°ऽपि समर्थोऽसि' इति च क्वचिद् दृश्येते ।
१२. १० – 'सिद्धि°' इतिस्थाने 'मुक्ति°' इति पाठः ।
१२. ११ – 'अथैतदप्यशक्तो°' इतिस्थाने 'अथैतदपि शक्तो°' इति पाठः ।
१२. ११ – 'कर्तुं मद्योगमाश्रितः' इतिस्थाने 'कर्तुं मद्योगमास्थितः' इति काश्मीरपाठः । 'कर्तुंमुद्योगमाश्रितः' इति नेपालदाक्षिणात्यमातृकासु कासुचित् पाठः ।
१२. ११ – 'यतात्मवान्' इतिस्थाने 'यतात्मवाक्' इति, 'जितात्मवान्' इति च पाठौ ।

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

---

१२. १२ – 'श्रेयो हि' इतिस्थाने 'श्रेयोऽभि°' इति पाठः ।

१२. १२ – '°रनन्तरम्' इतिस्थाने '°र्निरन्तरा' इति, '°रनन्तरा' इत्यपि च प्रायः काश्मीरपाठः ।

१२. १३ – 'अद्वेष्टा' इतिस्थाने 'अचेष्टा' इति पाठः ।

१२. १३ – 'करुण' इतिस्थाने 'वरुण' इति प्रामादिकः पाठः ।

१२. १३ – 'एव च' इतिस्थाने 'आत्मवान्' इति पाठः ।

१२, १३ – '°सुखः क्षमी' इतिस्थाने '°सुखक्षमी' इति, '°सुखक्षमः' इति च पाठौ ।

१२. १४ – 'यतात्मा' इतिस्थाने 'जितात्मा' इति पाठः ।

१२. १४ – 'मद्भक्तः स मे' इतिस्थाने 'मे भक्तः स मे' इति क्वचित् पाठः । तथा 'भक्तः स च मे' इत्यपि दृश्यते ।

१२. १५ – 'लोको' इतिस्थाने 'लोका' इति प्रामादिकः पाठः ।

१२. १५ – 'लोकान्नोद्विजते च यः' इतिस्थाने 'लोकान्नोद्विजते तु यः' इति, 'लोकान्नोद्विजते हि सः' इति च पाठौ । 'लोकादुद्विजते न यः' इत्यानन्दवर्धनपाठः ।

१२. १५ – 'हर्षामर्षभयोद्वेगै°' इतिस्थाने 'हर्षामर्षभयक्रोधै°' इति, 'हर्षमन्युभयक्रोधै°' इति च काश्मीरपाठौ । 'हर्षामर्शभयोद्वेगै°' इति, 'मर्षामर्षभयोद्वेगै°' इति, 'हर्षाद्धर्षभयोद्वेगै°' इति च क्वचित् ।

१२. १५ – 'च मे प्रियः' इतिस्थाने 'हि मे प्रियः' इति पाठः ।

१२. १६ – '°अनपेक्षः' इतिस्थाने 'अनपेक्ष°' इति पाठः ।

१२. १६ – 'गतव्यथः' इतिस्थाने 'दृढव्यथः' इति पाठः ।

१२. १६ – '°परित्यागी' इतिस्थाने '°फलत्यागी' इति प्रायः काश्मीरपाठः ।

१२. १६ – 'यो मद्भक्तः' इतिस्थाने 'यो मे भक्तः' इति, 'भक्तिमान् यः' इति, 'मद्भक्तः स च' इति च पाठाः ।

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

१२. १७ – '°परित्यागी' इतिस्थाने 'फलत्यागी' इति प्रायः काश्मीरपाठः ।
१२. १७ – 'भक्तिमान् यः' इतिस्थाने 'यो मद्भक्तः' इति पाठः ।
१२. १८ – 'समः शत्रौ च मित्रे' इतिस्थाने 'समशत्रौ च मित्रौ' इति, 'समशत्रौ च मित्रे' इति च पाठौ ।
१२. १८ – 'मानापमानयोः' इतिस्थाने 'मानावमानयोः' इति काश्मीरनेपालदाक्षिणात्यादिबह्वीषु मातृकासु पाठः ।
१२. १९ – 'तुल्यनिन्दा°' इतिस्थाने 'निन्दातुल्य°' इति पाठः ।
१२. १९ – 'अनिकेतः' इतिस्थाने 'अनिकेत°' इति पाठः ।
१२. १९ – 'मे प्रियो नरः' इतिस्थाने 'यः स मे प्रियः' इति 'योऽपि मे प्रियः' इति च पाठौ ।
१२. २० – 'धर्म्यामृत°' इतिस्थाने 'धर्मामृत°' इति बहुशः पाठः ।
१२. २० – 'भक्तास्ते°' इतिस्थाने 'भक्त्या ते°' इति पाठः ।
१२. २० – 'मे प्रियाः' इतिस्थाने 'मत्प्रियाः' इति पाठः ।
१२. पुष्पिकायाम् – 'भक्तियोगो' इतिस्थाने 'भक्तिसंज्ञायोगो' इति, 'भक्तिसंन्यासयोगो' इति, 'अव्यक्तोपासनं' इति, 'संन्यासयोगो' इति, 'योगवित्तमविवरणपूर्वकं कर्मफलत्यागरूपधर्मामृतोपदेशो' इति च पाठाः ।

# ॥ अथ त्रयोदशोऽध्यायः ॥

---

श्रीभगवानुवाच ।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम ॥ २ ॥

तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत् समासेन मे शृणु ॥ ३ ॥

---

१३. प्रारम्भे(*१) – अर्जुन उवाच ।

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञ(पा. भे., क्षेत्रज्ञं क्षेत्र)मेव च ।
एतद्वेदितुमिच्छामि ज्ञानं (पा. भे., ज्ञानाज्)ज्ञेयं च केशव ॥

इत्यधिकः पाठः प्रायः नेपालकाश्मीरवङ्गीयादिपुस्तकेषु, तथा क्वचिदन्यत्राप्युपलभ्यते। दाक्षिणात्यमातृकासु तु प्रायो न दृश्यते, नापि शाङ्करभाष्ये स्वीकृतः। क्वचिदयमधिकः श्लोको द्वादशाध्याय एवान्ते निवेशितो दृश्यते। मातृकान्तरे त्वतः परं द्वितीयोऽधिकः श्लोकः, प्रथमश्लोकप्रत्युत्तररूपः, पठ्यते यथा—

१३. प्रारम्भे (*२) – श्रीभगवानुवाच ।

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।
एतत् ते कथयिष्यामि ज्ञानं ज्ञेयं च भारत ॥

१३. १ – 'वेत्ति' इतिस्थाने 'वेद' इति प्रायः काश्मीरपाठः ।

१३. १ – 'इति' इतिस्थाने '°मिति' इति प्रायः काश्मीरपाठः ।

१३. १ – 'तद्विदः' इतिस्थाने 'तद्विधा' इति पाठः ।

१३. २ – 'क्षेत्रज्ञं चापि' इतिस्थाने 'क्षेत्रज्ञमपि' इति क्वचित् काश्मीरपाठः । 'क्षेत्रज्ञ इति' इति तु नेपालपाठः । 'क्षेत्रज्ञं वापि' इति त्वन्यत्र ।

१३. २ – 'क्षेत्रक्षेत्रज्ञयो°' इतिस्थाने 'क्षेत्रज्ञक्षेत्रयो°' इति पाठः ।

१३. ३ – 'तत् क्षेत्रं यच्च' इतिस्थाने 'यत् क्षेत्रं यं च' इति, 'यत् क्षेत्रं यच्च' इति, 'तत् क्षेत्रं यच्च' इति च पाठाः ।

१३. ३ – 'यद्विकारि°' इतिस्थाने 'तद्विकारि' इति पाठः ।

१३. ३ – 'यत्प्रभाव°' इतिस्थाने 'यत्स्वभाव°' इति क्वचित् काश्मीरपाठः ।

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

---

१३. ४ – '°र्बहुधा गीतं' इतिस्थाने '°र्बहुभिर्गीतं' इति काश्मीरमातृकान्तरे पाठः ।

१३. ४ – '°र्विनिश्चितैः' इतिस्थाने '°र्विनिश्चितम्' इति प्रायः काश्मीरपाठः ।

१३. ५ – 'चेन्द्रियगोचराः' इतिस्थाने 'चेन्द्रियगोचरः' इति पाठः । 'खे[स्वे]न्द्रियगोचराः' इत्यपि क्वचित् ।

१३. ६ – 'द्वेषः' इतिस्थाने '°द्वेषाः' इति, 'द्वेषं' इति च पाठौ ।

१३. ६ – '°श्चेतना धृतिः' इतिस्थाने '°श्चेतनाधृतिः [चेतना+आधृतिः]' इति ससंधिकः पाठो रामानुजभाष्ये ।

१३. ७ – 'अमानित्व°' इतिस्थाने 'अदानित्व°' इति पाठः ।

१३. ७ – 'शौचं' इतिस्थाने 'शौच्यं' इति पाठः ।

१३. ८ – '°मनहंकार एव' इतिस्थाने '°मनहंकारमेव' इति पाठः ।

१३. ९ – 'असक्तिरनभिष्वङ्गः' इतिस्थाने 'असङ्गिरनभिष्वङ्गः' इति, 'अशक्तिरनभिष्वङ्गः' इति, 'आसक्तिरनभिष्वङ्गः' इति, 'अनासक्तिरभिष्वङ्गः' इति च पाठाः ।

अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते ॥ १२ ॥

सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

---

१३. ११ – 'अध्यात्मज्ञाननित्यत्व°' इतिस्थाने 'अध्यात्मध्याननित्यत्व°' इति पाठः। 'अध्यात्मज्ञाननिष्ठत्व°' इति प्रायः काश्मीरपाठो रामानुजीयपाठश्च।

१३. ११ – '°दर्शनम्' इतिस्थाने '°चिन्तनम्' इति रामानुजीयपाठः। '°दर्शिनम्' इति क्वचित्।

१३. ११ – 'यदतो°' इतिस्थाने 'यत् ततो°' इति पाठः।

१३. १२ – अनादिमत् परं' इतिस्थाने 'अनादि मत्परं' इति पदच्छेदः शाङ्करभाष्ये निर्दिष्टः प्रत्याख्यातश्च। रामानुजभाष्ये तु 'अनादि मत्परं' इत्येव पदच्छेदः स्वीकृतः।

१३. १२ – 'न सत् तन्नासदु°' इतिस्थाने 'न सन्नासत् तदु°' इति पाठः।

१३. १३ – '°पाणिपादं तत्' इतिस्थाने '°पाणिपादान्तं' इति प्रायः काश्मीरपाठः। अन्यत्रापि दृश्यते, वल्लभभाष्ये च स्वीकृतः। '°पाणिपादं च' इत्यपि क्वचिदुपलभ्यते।

१३. १३ – '°शिरोमुखम्' इतिस्थाने '°शिरोमुखः' इति नेपालमातृकायाम्।

१३. १४ – 'सर्वभृच्चैव' इतिस्थाने 'सर्वहृच्चैव' इति, 'सर्वतश्चैव' इति च पाठौ।

१३. १५ – 'बहिरन्तश्च' इतिस्थाने 'हविरन्तश्च' इति पाठः।

१३. १५ – 'च तत्' इतिस्थाने 'च यत्' इति पाठः।

१३. १६ – 'च भूतेषु' इतिस्थाने 'विभक्तेषु' इति कासुचित् काश्मीरमातृकासु पाठः।

१३. १६ – 'च स्थितम्' इतिस्थाने 'संस्थितम्' इति पाठः।

१३. १६ – '°भर्तृ च तज्ज्ञेयं' इतिस्थाने '°भृन्न च तज्ज्ञेयं' इति पाठः। '°भर्तृ च तं ज्ञेयं' इत्यपि क्वचित्।

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २२ ॥

---

१३. १७ – 'तज्ज्योति°' इतिस्थाने 'तद्योनि°' इति पाठः ।

१३. १७ – 'हृदि सर्वस्य विष्ठितम्' इतिस्थाने 'सर्वस्य हृदि मध्यगम्' इत्येकस्यां काश्मीरमातृकायां पाठः । 'सर्वस्य हृदि धिष्ठितम्' इति प्रायः बह्वीषु मातृकासु नीलकण्ठादिटीकासु च पाठः । 'हृदि सर्वस्य वेष्टितम्' इति, 'हृदि सर्वत्र विष्ठितम्' इति, 'हृदि सर्वस्य धीष्ठितम्' इति क्वचित् पाठान्तराणि । शंकररामानुजभाष्ययोः 'विष्ठितम्' इति पाठः स्वीकृतः, तथापि शाङ्करभाष्यमातृकासु कासुचित् 'धिष्ठितम्' इत्युपलभ्यते ।

१३. १८ – 'इति क्षेत्रं' इतिस्थाने 'एतत् क्षेत्रं' इत्यभिनवगुप्तपाठः ।

१३. १८ – 'एतद्विज्ञाय' इतिस्थाने 'एव विज्ञाय' इति पाठः ।

१३. १९ – 'उभावपि' इतिस्थाने 'ह्युभावपि' इति पाठः ।

१३. १९ – 'विकारांश्च' इतिस्थाने 'विकाराश्च' इति प्रामादिकः पाठः ।

१३. २० – '°करण°' इतिस्थाने '°कारण°' इति बहुशः पाठः । शाङ्करभाष्ये पाठान्तरत्वेन '°कारण°' इति पाठो निर्दिष्ट उपलभ्यते ।

१३. २१ – 'प्रकृतिस्थो हि' इतिस्थाने 'सुखदुःखो हि' इति पाठः । 'प्रकृतिस्थोऽपि' इति त्वानन्दवर्धनपाठः ।

१३. २१ – '°सङ्गोऽस्य' इतिस्थाने '°सङ्गस्य' इति पाठः ।

१३. २२ – 'उपद्रष्टा°' इतिस्थाने 'उपदिष्टा°' इति, 'उपदेष्टा°' इति च पाठौ ।

१३. २२ – 'भर्ता' इतिस्थाने 'कर्ता' इति पाठः । 'भक्ता' इति तु प्रामादिकः ।

१३. २२ – 'देहेऽस्मिन्' इतिस्थाने 'देहे ह' इति पाठः ।

१३. २२ – 'परः' इतिस्थाने 'परम्' इति पाठः ।

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेण चापरे ॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

यावत् संजायते किंचित् सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ॥ २६ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

---

१३. २३ – 'एवं' इतिस्थाने 'एव' इति पाठो रामानुजभाष्ये तथा मातृकान्तरेष्वपि ।
१३. २३ – 'सर्वथा' इतिस्थाने 'स यथा' इति पाठः ।
१३. २३ – 'न स भूयोऽभिजायते' इतिस्थाने 'स पुनर्नाभिजायते' इति, 'न स भूयो हि जायते' इति, 'न स भूयोऽपि जायते' इति च पाठाः ।
१३. २४ – 'ध्यानेना°' इतिस्थाने 'ज्ञानेना°' इति, 'ध्याने चा°' इति च पाठौ ।
१३. २४ – 'अन्ये सांख्येन' इतिस्थाने 'अन्ये तु सांख्य°' इति पाठः ।
१३. २५ – 'अन्ये त्वेव°' इतिस्थाने 'अन्ये त्विद°' इति, 'अन्येऽप्येव°' इति, 'अन्ये चैव' इति च पाठाः ।
१३. २५ – '°मजानन्तः' इतिस्थाने '°मजायन्त' इति प्रामादिकः पाठः ।
१३. २५ – 'उपासते' इतिस्थाने 'उपास्यते' इति प्रामादिकः पाठः ।
१३. २५ – '°तरन्त्येव' इतिस्थाने '°तरन्त्येवं' इति पाठः ।
१३. २५ – 'मृत्युं श्रुतिपरायणाः' इतिस्थाने 'मृत्युसंसारसागरात्' इति पाठः ।
१३. २६ – 'संजायते किंचित्' इतिस्थाने 'संभवते किंचित्' इति पाठः । 'किंचित् संभवति' इति प्रायः काश्मीरपाठः ।
१३. २७ – 'समं' इतिस्थाने 'स मां' इति पाठः ।
१३. २७ – '°त्स्वविनश्यन्तं' इतिस्थाने '°त्सु विनश्यन्तं' इति पाठः ।
१३. २७ – 'स पश्यति' इतिस्थाने 'न पश्यति' इति पाठः ।
१३. २८ – 'हिनस्त्यात्म°' इतिस्थाने 'हीनस्यात्म°' इति प्रामादिकः पाठः ।
१३. २८ – 'याति' इतिस्थाने 'यान्ति' इति पाठः ।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥

---

१३. २९ – 'च' इतिस्थाने 'हि' इति प्रायः काश्मीरपाठः ।
१३. २९ – 'तथात्मान°' इतिस्थाने 'तदात्मान°' इति, 'सदात्मान°' इति च पाठौ ।
१३. ३० – 'यदा' इतिस्थाने 'यथा' इति पाठः ।
१३. ३० – '°मेकस्थ°' इतिस्थाने '°मेकत्व°' इति पाठः ।
१३. ३० – 'विस्तारं' इतिस्थाने 'कर्तारं' इति पाठः ।
१३. ३० – 'तदा' इतिस्थाने 'सदा' इति पाठः ।
१३. ३१ – 'अनादित्वान्निर्गुणत्वात्' इतिस्थाने 'अनादित्वान्निर्मलत्वात्' इति पाठः । 'अनत्वाच्च निर्गुणत्वात्' इति यवद्वीपपाठः ।
१३. ३१ – 'परमात्माय°' इतिस्थाने 'परमात्मान°' इति पाठः ।
१३. ३२ – 'नोपलिप्यते' इतिस्थाने 'नोपलभ्यते' इति द्वितीयचतुर्थचरणयोरन्ते यवद्वीपपाठः ।
१३. ३२ – 'सर्वत्राव°' इतिस्थाने 'सर्वदाव°' इति पाठः ।
१३. ३२ – 'देहे' इतिस्थाने 'देही' इति पाठः ।
१३. ३३ – एकस्यां काश्मीरमातृकायां ३४ श्लोकः ३३ श्लोकात् पूर्वं लिखितः ।
१३. ३३ – '°त्येकः' इतिस्थाने '°त्येकं' इति पाठः । '°त्येषो' इति यवद्वीपपाठः ।
१३. ३३ – 'कृत्स्नं लोक°' इतिस्थाने 'लोकं कृत्स्न°' इति यवद्वीपपाठः ।
१३. ३३ – 'क्षेत्रं क्षेत्री' इतिस्थाने 'क्षेत्री क्षेत्रं' इति यवद्वीपपाठः । 'क्षेत्रं क्षेत्री' इति च क्वचित् ।
१३. ३३ – 'तथा कृत्स्नं' इतिस्थाने 'तथा सर्वं' इति पाठः ।

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

१३. ३४ – 'परम्' इतिस्थाने 'पराम्' इति पाठः ।

१३. पुष्पिकायाम् – 'क्षेत्रक्षेत्रज्ञयोगो' इतिस्थाने 'क्षेत्रक्षेत्रज्ञनिर्देशो' इति, 'क्षेत्र-क्षेत्रज्ञनिदेशो' इति, 'क्षेत्रक्षेत्रज्ञनिर्देशयोगो' इति, 'क्षेत्रज्ञनिर्देशयोगो' इति, 'क्षेत्रप्रकृतियोगो' इति, 'क्षेत्रक्षेत्रज्ञविभागो' इति, 'क्षेत्रक्षेत्रज्ञविभागयोगो' इति, 'क्षेत्रादिनिरूपणं' इति, 'प्रकृतिपुरुषविभागयोगो' इति, 'प्रकृतिपुरुषविवेकयोगो' इति, 'प्रकृतिपुरुषक्षेत्रक्षेत्रज्ञादिवर्णनं' इति, 'ज्ञानविज्ञानयोगो' इति च पाठान्तराणि ।

## ॥ अथ चतुर्दशोऽध्यायः ॥

---

श्रीभगवानुवाच ।

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

---

१४. १ – 'भूयः' इतिस्थाने 'पुनः' इति पाठः ।

१४. १ – '॰मितो गताः' इतिस्थाने '॰मतो गताः' इति, '॰मुपागताः' इति च पाठौ ।

१४. २ – '॰मुपाश्रित्य' इतिस्थाने '॰मपाश्रित्य' इति पाठः ।

१४. २ – '॰मागताः' इतिस्थाने '॰मास्थिताः' इति पाठः ।

१४. २ – 'सर्गेऽपि' इतिस्थाने 'स्वर्गेऽपि' इति पाठः ।

१४. २ – 'नोपजायन्ते' इतिस्थाने 'नोपज्ञायन्ते' इति, 'नोऽपि जायन्ते' इति च पाठौ । 'न प्रजायन्ते' इत्यानन्दवर्धनपाठः ।

१४. २ – 'व्यथन्ति च' इतिस्थाने 'व्ययन्ति च' इति, 'विशन्ति च' इति, 'क[क्व]थन्ति च' इति, 'व्यथन्ति ते' इति च पाठभेदाः ।

१४. ३ – 'दधाम्यहम्' इतिस्थाने 'ददाम्यहम्' इति पाठः ।

१४. ४ – 'ब्रह्म महद्योनि॰' इतिस्थाने 'योनिर्महद्ब्रह्म' इति नेपालपाठः ।

१४. ४ – '॰रहं' इतिस्थाने '॰स्त्वहं' इति पाठः ।

१४. ४ – 'बीज॰' इतिस्थाने 'जीव॰' इति पाठः ।

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

---

१४. ६ – 'निर्मलत्वात्' इतिस्थाने 'निर्ममत्वात्' इति पाठः ।
१४. ६ – 'सुखसङ्गेन' इतिस्थाने 'सुखदुःखेन' इति, 'सुखसङ्गे नि°' इति च पाठौ । 'सुखमङ्गेन' इति तु प्रामादिकः ।
१४. ६ – 'ज्ञानसङ्गेन' इतिस्थाने 'ज्ञानसंज्ञेन' इति, 'ज्ञानसङ्घेन' इति च पाठौ ।
१४. ६ – 'चानघ' इतिस्थाने 'वानघ' इति पाठः ।
१४. ७ – '°समुद्भवम्' इतिस्थाने '°समुद्भवा' इति पाठः ।
१४. ७ – 'देहिनम्' इतिस्थाने 'देहिनाम्' इति पाठः ।
१४. ८ – 'तम°' इतिस्थाने 'तत°' इति पाठः ।
१४. ८ – 'मोहनं' इतिस्थाने 'मोहिनं' इति प्रामादिकः पाठः ।
१४. ८ – '°देहिनाम्' इतिस्थाने 'देहिनम्' इति प्रामादिकः पाठः ।
१४. ९ – 'सुखे' इतिस्थाने 'सक्ते' इति यवद्वीपपाठः ।
१४. ९ – 'सञ्जयति' इतिस्थाने '°न जयति' इति पाठः ।
१४. ९ – 'कर्मणि' इतिस्थाने 'कर्माणि' इति प्रामादिकः पाठः ।
१४. ९ – 'तु तमः' इतिस्थाने 'मनुजं' इति पाठः । 'तु तमं' इति, 'तु मतः' इति च प्रामादिकौ ।
१४. ९ – '°त्युत' इतिस्थाने '°त्यथ' इति यवद्वीपपाठः ।
१४. १० – '°श्चाभिभूय' इतिस्थाने '°श्चापिभूय' इति, '°श्चाभिभूयः' इति, '°स्त्वाभिभूय' इति प्रामादिकाः पाठाः ।
१४. १० – 'भवति भारत' इतिस्थाने 'भारत वर्धते' इति प्रायः काश्मीरपाठः ।
१४. १० – 'तमश्चैव' इतिस्थाने 'दमश्चैव' इति पाठः ।

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

---

१४. ११ – 'प्रकाश' इतिस्थाने 'प्रकाशम्' इति पाठः। अत्र 'प्रकाशः' इति प्रायः पदच्छेदः, 'प्रकाशे' इति तु रामानुजः।

१४. ११ – 'विद्याद्विवृद्धं' इतिस्थाने 'विन्याद्विवृद्धं' इति पाठः। 'विद्याविवृद्धं' इति, 'विद्याद्विवृद्धिं इति च क्वचित्।

१४. ११ – 'सत्त्व°' इतिस्थाने 'सत्य°' इति पाठः।

१४. ११ – '°मित्युत' इतिस्थाने '°मात्मनः' इत्येकस्यां काश्मीरमातृकायां पाठः।

१४. १२ – 'लोभः प्रवृत्ति°' इतिस्थाने 'लोभप्रवृत्ति°' इति पाठः।

१४. १२ – 'कर्मणामशमः स्पृहा' इतिस्थाने 'कर्मणामशमस्पृहा' इति पाठः। 'कर्मणो मनसः स्पृहा' इत्येकस्यां काश्मीरमातृकायाम्। 'कर्मणामशमश्च तृट्' इति रामकवेरभिनवगुप्तस्य च पाठः।

१४. १२ – 'विवृद्धे' इतिस्थाने 'प्रवृद्धे' इति पाठः।

१४. १२ – 'भरतर्षभ' इतिस्थाने 'कुरुनन्दन' इति रामकवेः पाठः।

१४. १३ – 'अप्रकाशोऽप्रवृत्ति°' इतिस्थाने 'अप्रकाशं प्रवृत्ति°' इति,'अप्रकाशाप्रवृत्ति°' इति, 'अप्रकाशोऽप्रविद्य°' इति च पाठाः।

१४. १३ – 'मोह एव' इतिस्थाने 'मोहमेव' इति पाठः।

१४. १३ – 'जायन्ते' इतिस्थाने 'जायन्ति' इति पाठः।

१४. १३ – 'विवृद्धे' इतिस्थाने 'प्रवृद्धे' इति पाठः।

१४. १३ – 'कुरुनन्दन' इतिस्थाने 'भरतर्षभ' इति पाठः।

१४. १४ – 'प्रवृद्धे' इतिस्थाने 'प्रवृत्ते' इति पाठः। 'विवृद्धे' इति तु प्रायः काश्मीरपाठः।

१४. १४ – 'याति' इतिस्थाने 'यान्ति' इति बहुशः प्रामादिकः पाठः।

१४. १४ – 'तदोत्तमविदां' इतिस्थाने 'तत्रोत्तमविदां' इति, 'तदोत्तमविदाँल्°' इति च पाठौ। 'ततोत्तमविदां' इति तु प्रामादिकः।

१४. १४ – '°नमलान्' इतिस्थाने '°न्निर्मलान्' इति, '°नचलान्' इति च पाठौ।

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

---

१४. १५ – 'कर्मसङ्गिषु जायते' इतिस्थाने 'कर्मसंधिषु जायते' इति, 'कर्मसङ्गेषु जायते' इति च क्वचित् पाठौ । 'जायते कर्मसङ्गिषु' इति त्वानन्दवर्धनपाठः ।

१४. १५ – 'तथा प्रलीनस्तमसि' इतिस्थाने 'तदा तमसि लीने तु' इति, 'तथा प्रलीने तमसि' इति, 'तथा तमसि लीने तु' इति, 'तथा तमसि लीनस्तु' इति च पाठाः ।

१४. १५ – 'मूढ°' इतिस्थाने 'मूढा' इति पाठः ।

१४. १६ – 'सात्त्विकं निर्मलं' इतिस्थाने 'निर्मलं सात्त्विकं' इति पाठः ।

१४. १६ – 'फलं दुःख°' इतिस्थाने 'परं दुःख°' इति पाठः ।

१४. १६ – 'तमसः' इतिस्थाने 'तमसा' इति पाठः ।

१४. १७ – 'लोभ' इतिस्थाने 'मोह' इति पाठः ।

१४. १७ – 'तमसो भवतोऽ°' इतिस्थाने 'जायेते तमसोऽ°' इति, 'जायेतां तमसोऽ°' इति च काश्मीरपाठौ । 'जायेत तमसोऽ°' इति, तथा 'तमसो भवतोऽ°' इति, 'तपसो भवतोऽ°' इति च क्वचित् ।

१४. १७ – एकस्यां काश्मीरमातृकायामतः परं विंशतितमः श्लोकः पठ्यते ।

१४. १८ – 'गच्छन्ति सत्त्वस्था' इतिस्थाने 'गच्छसि सत्त्वेन' इति पाठः । 'गच्छति सत्त्वस्थो' इति यवद्वीपपाठः ।

१४. १८ – 'तिष्ठन्ति राजसाः' इतिस्थाने 'तिष्ठति राजसः' इति यवद्वीपपाठः अन्यत्राप्युपलभ्यते ।

१४. १८ – '°वृत्तस्था' इतिस्थाने '°वृत्तिस्थो' इति कासुचित् काश्मीरादिमातृकासु पाठो दृश्यते । '°वृत्तिश्च' इति तु यवद्वीपपाठः ।

१४. १८ – 'अधो गच्छन्ति तामसाः' इतिस्थाने 'ह्यधो गच्छति तामसः' इति यवद्वीपपाठः ।

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

अर्जुन उवाच ।

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

श्रीभगवानुवाच ।

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥

---

१४. १९ – 'द्रष्टानु°' इतिस्थाने 'दृष्टानु°' इति पाठः ।
१४. १९ – 'सोऽधिगच्छति' इतिस्थाने 'सोऽपि गच्छति' इति पाठः ।
१४. १९ – आनन्दवर्धनपाठे २० श्लोकः १९ श्लोकात् पूर्वं दृश्यते ।
१४. २० – 'देही' इतिस्थाने 'देहे' इति, 'देहं' इति च पाठौ ।
१४. २० – '°मृत्यु°' इतिस्थाने '°मृत्युं' इति पाठः ।
१४. २० – '°ऽमृत°' इतिस्थाने '°ऽमृत्यु°' इति प्रामादिकः पाठः ।
१४. २१ – '°स्त्रीन् गुणा°' इतिस्थाने '°स्त्रिगुणा°' इति प्रथमपादे पाठः ।
१४. २२ – '°मेव च' इतिस्थाने 'एव च' इति पाठः ।
१४. २२ – 'संप्रवृत्तानि' इतिस्थाने 'संनिवृत्तानि' इति पाठः ।
१४. २२ – 'न निवृत्तानि' इतिस्थाने 'निवृत्तानि न' इति पाठः । 'न विवृत्तानि' इति क्वचित् ।
१४. २३ – 'गुणा वर्तन्त इत्येव' इतिस्थाने 'गुणा गुणेषु वर्तन्त' इति पाठः ।
१४. २३ – 'इत्येव' इतिस्थाने 'इत्येवं' इति पाठः ।
१४. २३ – 'योऽवतिष्ठति' इतिस्थाने 'यो[ऽ]ज्ञस्तिष्ठति' इति प्रायः काश्मीरपाठः । 'योऽनुतिष्ठति' इति पाठः क्वचिदुपलभ्यते, शाङ्करभाष्ये पाठान्तरत्वेन च निर्दिष्टो वर्तते । 'योऽनुतिष्ठति' इति क्वचिदन्यत्र ।

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

१४. २४ – '°सुखः स्वस्थः' इतिस्थाने '°सुखस्वस्थः' इति पाठः । क्वचित् काश्मीरपाठे रामकविटीकायां च '°सुखस्वप्नः इति पाठो दृश्यते ।

१४. २४ – '°लोष्टाश्म°' इतिस्थाने '°लोष्टात्म°' इति पाठः ।

१४. २४ – '°संस्तुतिः' इतिस्थाने '°संस्थितिः' इति पाठः ।

१४. २५ – 'मानापमान°' इतिस्थाने काश्मीरदाक्षिणात्यादिबहीषु मातृकासु रामानुजपाठे यवद्वीपपाठे च 'मानावमान°' इति पठ्यते ।

१४. २५ – '°परित्यागी' इतिस्थाने '°फलत्यागी' इति प्रायः काश्मीरपाठः । '°परित्यागे' इत्यपि क्वचित् ।

१४. २६ – 'सेवते' इतिस्थाने 'सेव्यते' इति पाठः ।

१४. २६ – 'स' इतिस्थाने 'त्रीन्' इति पाठः ।

१४. २६ – '°त्यैतान्' इतिस्थाने '°त्यैनान्' इति पाठः । '°त्येतान्' इति, '°त्यैता' इति च प्रामादिकौ ।

१४. २६ – 'कल्पते' इतिस्थाने 'कल्प्यते' इति पाठः ।

१४. २७ – 'धर्मस्य' इतिस्थाने 'चित्तस्य' इति पाठः ।

१४. पुष्पिकायाम् – 'गुणत्रयविभागयोगो' इतिस्थाने 'गुणविभागयोगो' इति, 'गुणत्रयविचारो' इति, 'गुणविमर्दनो' इति, 'प्रकृतिगुणभेदो' इति, 'प्रतिगुणभेदो' इति 'प्रकृतिपुरुषगुणभेदो' इति, 'गुणातीतयोगो' इति, 'गुणत्रयगुणातीतलक्षणविभागयोगो' इति, 'सत्त्वरजस्तमोगुणमयजगद्वर्णनपूर्वकगुणातीतस्थितिप्राप्तिसाधनज्ञाननिदर्शनं' इति च पाठान्तराणि ।

## ॥ अथ पञ्चदशोऽध्यायः ॥

---

श्रीभगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥

---

१५. १ – '°शाख°' इतिस्थाने '°शाखा°' इति प्रामादिकः पाठः ।
१५. १ – 'यस्य' इतिस्थाने 'तस्य' इति पाठः ।
१५. २ – 'अधश्चोर्ध्वं' इतिस्थाने 'अधश्चोर्ध्वं च' इति दाक्षिणात्यपाठः ।
१५. २ – '°स्तस्य' इतिस्थाने 'यस्य' इति पाठः ।
१५. २ – '°न्यनुसंततानि' इतिस्थाने '°न्यनुसंगतानि' इति, '°न्यनुसंयतानि' इति च पाठौ ।
१५. २ – '°बन्धीनि' इतिस्थाने '°बन्धेन' इति पाठः ।
१५. ३ – 'तथोपलभ्यते' इतिस्थाने 'ततोपलभ्यते' इति, 'तथोपपद्यते' इति च पाठौ ।
१५. ३ – 'नान्तो न चादिर्न°' इतिस्थाने 'नान्तो न चाद्यं न' इति, 'नान्तं न मध्यं न' इति च पाठौ ।
१५. ३ – 'संप्रतिष्ठा' इतिस्थाने 'संप्रतिष्ठिता' इति, 'संप्रतिष्ठात्' इति च पाठौ ।
१५. ३ – 'सुविरूढ°' इतिस्थाने 'प्रविरूढ°' इति, 'सविरूढ°' इति, 'सुविमूढ°' इति, 'स्वविरूढ°' इति च पाठभेदाः ।
१५. ३ – 'दृढेन' इतिस्थाने 'शितेन' इति प्रायः काश्मीरपाठः ।
१५. ३ – 'छित्त्वा' इतिस्थाने 'च्छित्त्वा' इति द्वित्रासु मातृकासु पाठः । 'हित्वा' इति क्वचिद्दाक्षिणात्यमातृकासु पाठः ।

ततः पदं तत् परिमार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढा पदमव्ययं तत् ॥ ५ ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

---

१५. ४ – 'पदं तत् परि°' इतिस्थाने 'परं तत् परि°' इति, 'परं तत् पदं' इति, 'पदं यत् परि°' इति च पाठाः।

१५. ४ – 'गता न निवर्तन्ति' इतिस्थाने 'गतो न निवर्तेत' इति प्रायः काश्मीरपाठः। 'गतो न निवर्तति' इत्यपि क्वचित्।

१५. ४ – 'तमेव चाद्यं' इतिस्थाने 'तमेवाद्यं' इति पाठः।

१५. ४ – 'प्रपद्ये यतः' इतिस्थाने 'प्रपद्येद्यतः' इति पाठः। प्रपद्येयतः [प्रपद्य + इयतः]' इति रामानुजभाष्ये निर्दिष्टः पाठभेदः।

१५. ५ – 'निर्मान°' इतिस्थाने निर्माण°' इति बह्वीषु मातृकासु पाठः।

१५. ५ – 'अध्यात्मनित्या' इतिस्थाने 'अध्यात्मनिष्ठा' इति, 'अध्यात्मचित्ता' इति, 'अध्यात्मविद्या' इति, 'अध्यात्मयोगा' इति च पाठाः।

१५. ५ – 'विनिवृत्त°' इतिस्थाने 'विनिवर्त°' इति प्रामादिकः पाठः।

१५. ६ – 'तद्भासयते' इतिस्थाने 'यद्भासयते' इति पाठः।

१५. ६ – 'न शशाङ्को न' इतिस्थाने 'न शशी न च' इति पाठः।

१५. ६ – 'निवर्तन्ते' इतिस्थाने 'निवर्तेत' इति, 'निवर्तते' इति च पाठौ।

१५. ७ – 'जीवभूतः' इतिस्थाने 'जीवलोकः' इति पाठः।

१५. ८ – '°त्क्रामतीश्वरः' इतिस्थाने '°त्क्रमतेश्वरः' इति प्रामादिकः पाठः।

१५. ८ – 'गृहीत्वैतानि' इतिस्थाने 'गृहीत्वा तानि' इति पाठः।

१५. ८ – '°गन्धानिवा°' इतिस्थाने '°गन्धमिवा°' इति पाठः।

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥ १२ ॥

---

१५. ९ – 'श्रोत्रं चक्षुः' इतिस्थाने 'चक्षुः श्रोत्रं' इति पाठः ।

१५. ९ – 'स्पर्शनं च' इतिस्थाने 'स्पर्शनश्च' इति पाठः ।

१५. ९ – 'घ्राणमेव' इतिस्थाने 'प्राणमेव' इति पाठः ।

१५. ९ – '°श्चायं' इतिस्थाने '°श्चैव' इति, '°श्चैनं' इति च पाठौ ।

१५. १० – 'उत्क्रामन्तं स्थितं वापि' इतिस्थाने 'तिष्ठन्तमुत्क्रामन्तं वा' इति, 'तिष्ठन्तमुत्क्रमन्तं वा' इति च प्रायः काश्मीरपाठौ । 'उत्क्रामन्तं स्थितं चापि' इत्यपि दृश्यते ।

१५. १० – 'भुञ्जानं वा' इतिस्थाने 'भुञ्जानं च' इति पाठः ।

१५. १० – 'नानुपश्यन्ति' इतिस्थाने 'न नु पश्यन्ति' इति, 'न उ पश्यन्ति' इति च पाठौ ।

१५. १० – '°चक्षुषः' इतिस्थाने '°चक्षुषा' इति बहुशः पाठः ।

१५. ११ – एकस्यां काश्मीरमातृकायामस्य श्लोकस्य पूर्वार्धं उत्तरार्धं इति, उत्तरार्धश्च पूर्वार्धं इति व्यत्यस्तौ पश्येते ।

१५. ११ – '°श्चैनं' इतिस्थाने '°श्चैवं' इति, '°श्चैव' इति च पाठौ ।

१५. ११ – 'यतन्तो' इतिस्थाने 'यततो' इति तृतीयचरणे पाठः ।

१५. ११ – '°ऽप्यकृतात्मानो' इतिस्थाने '°ऽपि कृतात्मानो' इति, '°ऽन्यकृतात्मानो' इति च पाठौ ।

१५. ११ – 'नैनं' इतिस्थाने 'नैवं' इति पाठः ।

१५. १२ – 'तेजो जग°' इतिस्थाने 'ज्योतिर्जग°' इति पाठः ।

१५. १२ – '°द्भासयते°' इतिस्थाने '°द्भावयतेऽ°' इति पाठः ।

१५. १२ – 'यच्चन्द्र°' इतिस्थाने 'यश्चन्द्र°' इति प्रामादिकः पाठः ।

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

सर्वस्य चाहं हृदि संनिविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

---

१५. १३ – 'गामाविश्य च' इतिस्थाने 'मामाविश्य च' इति, 'योगमाविश्य' इति च पाठौ ।
१५. १३ – 'चौषधीः' इतिस्थाने 'वौषधीः' इति पाठः ।
१५. १४ – 'वैश्वानरो' इतिस्थाने 'विश्वानरो' इति पाठः ।
१५. १४ – '॰माश्रितः' इतिस्थाने '॰मास्थितः' इति प्रायः काश्मीरपाठः ।
१५. १४ – 'प्राणापान॰' इतिस्थाने 'प्राणापानः' इति पाठः ।
१५. १४ – 'चतुर्विधम्' इतिस्थाने 'चतुर्विधः' इति पाठः ।
१५. १५ – 'मत्तः स्मृतिर्ज्ञानमपोहनं' इतिस्थाने 'मत्तः स्मृतिज्ञानमपोहनं' इति, 'मत्तस्मृतिज्ञानमपोहनं' इति, 'मत्तस्मृतिर्ज्ञानमपोहनं' इति, 'मत्तः स्मृतिज्ञानममोहनं' इति च पाठाः ।
१५. १५ – 'वेदैश्च' इतिस्थाने 'वेदैः' इति पाठः ।
१५. १५ – '॰द्वेदविदेव' इतिस्थाने '॰द्वेदकृदेव' इति प्रायः काश्मीरपाठः ।
१५. १६ – 'उच्यते' इतिस्थाने 'एव च' इति पाठः ।
१५. १७ – '॰व्यय ईश्वरः' इतिस्थाने '॰व्ययमीश्वरः' इति पाठः ।
१५. १८ – 'यस्मात्' इतिस्थाने 'तस्मात्' इति पाठः ।
१५. १८ – '॰मक्षरादपि' इतिस्थाने '॰मक्षरस्यापि' इति पाठः ।
१५. १८ – '॰स्मि लोके' इतिस्थाने '॰स्मिँल्लोके' इत्यानन्दवर्धनपाठः ।

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ २० ॥

---

१५. १९ – 'भारत' इतिस्थाने 'भारतः' इति पाठः ।

१५. २० – 'शास्त्रमिदमुक्तं मया°' इतिस्थाने 'शास्त्रं मया प्रोक्तं तव°' इति द्वित्रासु काश्मीरमातृकासु पाठः, तथा रामकविपाठश्च ।

१५. २० – 'कृतकृत्यश्च' इतिस्थाने 'कृतकृत्यं च' इति पाठः ।

१५. २० [*१] – एकस्यां मातृकायामन्तेऽधिकः श्लोको यथा—
तावद्भ्रमति वै जन्तुर्यावत् तत्त्वं न विन्दति ।
ज्ञाते तत्त्वे तु वै तस्य ज्ञातव्यं नावशिष्यते ॥

१५. पुष्पिकायाम् – 'पुरुषोत्तमयोगो' इतिस्थाने 'पुराणपुरुषोत्तमयोगो' इति, 'पुरुषोत्तमप्रकृतियोगो' इति, 'बुद्धियोगो' इति, 'अक्षरनिर्देशो' इति, 'संसारविषवृक्षच्छेदकुठारो' इति, 'संसारविषवृक्षच्छेदकुठारयोगो' इति, 'पुरुषोत्तमयोगसंसारवृक्षच्छेदनयोगो' इति, 'गुह्यशास्त्रविवर्णनपूर्वकं पुरुषोत्तमयोगात्मको' इति च पाठाः ।

## ॥ अथ षोडशोऽध्यायः ॥

---

श्रीभगवानुवाच ।

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

---

१६. १ – '॰संशुद्धि॰' इतिस्थाने '॰संसिद्धि॰' इति पाठः ।

१६. १ – '॰योग॰' इतिस्थाने '॰योगे' इति पाठः ।

१६. १ – '॰व्यवस्थितिः' इतिस्थाने '॰व्यवस्थितः' इति पाठः ।

१६. २ – '॰स्त्यागः शान्ति॰' इतिस्थाने '॰स्त्यागोऽसक्ति॰' इति रामकण्ठानन्दवर्धनयोः पाठः, क्वचिदन्यत्रापि दृश्यते ।

१६. २ – 'भूतेष्वलोलुप्त्वं' इतिस्थाने 'भूतेष्वलोलत्वं' इति, 'भूतेष्वलौल्यं च' इति, 'भूतेष्वलोलुत्वं' इति च पाठाः । 'भूतेष्वलौल्यं च' इति तु प्रायः काश्मीरपाठः । 'भूतेषु लोलुप्त्वं' इति, 'भूतेऽथ लोलुप्त्वं' इति च प्रामादिकौ पाठौ ।

१६. २ – 'मार्दवं, इतिस्थाने 'आर्जवं' इति क्वचित् पाठः ।

१६. ३ – 'शौचमद्रोहो' इतिस्थाने 'तुष्टिरद्रोहो' इति कासुचित् काश्मीरमातृकासु पाठः ।

१६. ३ – 'नातिमानिता' इतिस्थाने 'नाभिमानता' इति नेपालपाठः, प्रायः काश्मीरपाठश्च ।

१६. ३ – 'भवन्ति' इतिस्थाने 'भजन्ति' इति पाठः ।

१६. ३ – '॰मभिजातस्य' इतिस्थाने '॰मतिजातस्य' इति पाठः ।

१६. ३ – 'भारत' इतिस्थाने 'पाण्डव' इति पाठः ।

१६. ४ – '॰ऽतिमानश्च' इतिस्थाने '॰ऽभिमानश्च' इति वङ्गकाश्मीरनेपालपाठः ।

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥

---

१६. ५ – 'दैवी' इतिस्थाने 'देवी' इति पाठः ।
१६. ५ – 'निबन्धाया°' इतिस्थाने 'निर्बन्धाया°' इति पाठः ।
१६. ५ – 'दैवीमभि°' इतिस्थाने 'देवीमभि°' इति पाठः ।
१६. ५ – 'पाण्डव' इतिस्थाने 'भारत' इति पाठः ।
१६. ६ – '°सर्गौ' इतिस्थाने '°सङ्गौ' इति पाठः ।
१६. ६ – 'लोकेऽ°' इतिस्थाने 'भूतेऽ°' इति पाठः ।
१६. ६ – 'दैवो' इतिस्थाने 'देवो' इति पाठः ।
१६. ६ – 'विस्तरशः' इतिस्थाने 'दिस्तरतः' इति पाठः ।
१६. ७ – 'न शौचं' इतिस्थाने 'नाशौचं' इति पाठः । 'न सत्यं' इति चैकस्यां मातृकायाम् ।
१६. ७ – 'नापि' इतिस्थाने 'वापि' इति पाठः ।
१६. ७ – 'चाचारो' इतिस्थाने 'वाचारो' इति पाठः ।
१६. ८ – 'ते' इतिस्थाने 'च' इति क्वचित् काश्मीरपाठः ।
१६. ८ – 'किमन्यत् काम°' इतिस्थाने 'अकिंचित्कम°' इति काश्मीरपाठः । 'अकिंचित् काम°' इति त्वानन्दवर्धनपाठः ।
१६. ८ – '°हैतुकम्' इतिस्थाने 'हेतुकम्' इति काश्मीरदाक्षिणात्यादिमातृकासु प्रायः पाठः ।
१६. ९ – 'दृष्टि°' इतिस्थाने 'बुद्धि°' इत्यानन्दवर्धनपाठः ।
१६. ९ – 'प्रभवन्त्युग्र°' इतिस्थाने 'प्रवर्तन्त्युग्र°' इत्यानन्दवर्धनपाठः ।
१६. ९ – '°ऽहिताः' इतिस्थाने '°ऽशुभाः' इति कासुचित् काश्मीरदाक्षिणात्यादिमातृकासु पाठः ।

कामममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥

---

१६. १० – '°मान°' इतिस्थाने '°लोभ°' इति प्रायः काश्मीरपाठः ।

१६. १० – '°मदान्विताः' इतिस्थाने '°मदाश्रिताः' इत्यानन्दवर्धनपाठः ।

१६. १० – 'मोहाद्गृहीत्वासद्ग्राहान्' इतिस्थाने 'असद्ग्राहाश्रिताः क्रूराः' इति प्रायः काश्मीरपाठः । 'मोहाद्गृहीत्वासद्ग्राहं' इति च क्वचित् ।

१६. १० – 'प्रवर्तन्तेऽशुचि°' इतिस्थाने 'प्रचरन्त्यशुचि°' इति प्रायः काश्मीरपाठः । 'प्रभवन्तोऽशुचि°' इत्यपि क्वचिदुपलभ्यते ।

१६. ११ – '°मपरिमेयां' इतिस्थाने '°मपरमेयां' इति, '°मपरिमेये' इति च पाठौ ।

१६. ११ – '°मुपाश्रिताः' इतिस्थाने '°मपाश्रिताः' इति पाठः ।

१६. १२ – 'ईहन्ते' इतिस्थाने 'रोहन्ते' इति पाठः ।

१६. १२ – '°भोगार्थ°' इतिस्थाने '°लोभार्थ°' इति क्वचित् काश्मीरपाठः । '°भोगार्थान्' इति तु प्रायः काश्मीरपाठः ।

१६. १२ – '°नार्थ°' इतिस्थाने '°नाथ' इति पाठः ।

१६. १२ – '°संचयान्' इतिस्थाने '°संचयम्' इति, '°संचितान्' इति च पाठौ । '°संजयान्' इत्यपि क्वचिदुपलभ्यते ।

१६. १३ – '°मिदं प्राप्स्ये' इतिस्थाने '°मिमं प्राप्स्ये' इति क्वचिन्मातृकासु पाठः । स एव च रामानुजीयभाष्ये ।

१६. १३ – 'मनोरथम्' इतिस्थाने 'मनोगतम्' इत्यानन्दवर्धनपाठः ।

१६. १३ – 'इदमस्तीदमपि' इतिस्थाने 'इदं चास्तीदमपि' इति, 'इदमस्तीदमिति' इति च पाठौ ।

१६. १३ – 'भविष्यति' इतिस्थाने 'भविष्यन्ति' इति पाठः ।

१६. १४ – 'भोगी' इतिस्थाने 'योगी' इति पाठः ।

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

---

१६. १५ – 'आढ्योऽभि°' इतिस्थाने 'आद्योऽभि°' इति, 'आढ्योऽपि' इति च पाठौ।
१६. १५ – 'मया' इतिस्थाने '°ऽपि वा' इति पाठः।
१६. १५ – 'यक्ष्ये' इतिस्थाने 'यक्षे' इति प्रामादिकः पाठः।
१६. १५ – 'दास्यामि' इतिस्थाने 'दास्याम' इति पाठः।
१६. १५ – 'मोदिष्य' इतिस्थाने 'मोदिष्ये' इति संधिरहितः पाठः प्रायशो दृश्यते।
१६. १५ – '°विमोहिताः' इतिस्थाने '°विमोहितः' इति पाठः।
१६. १६ – '°चित्तविभ्रान्ता' इतिस्थाने '°चित्ता विभ्रान्ता' इति, '°चित्तसंभ्रान्ता' इति च पाठौ। '°चित्तविभ्रान्त°' इत्येकस्यां मातृकायाम्।
१६. १६ – 'मोहजालसमावृताः' इतिस्थाने 'मोहजालविमोहिताः' इति पाठः। 'मोहस्यैव वशं गताः' इति तु प्रायः काश्मीरपाठः।
१६. १६ – '°भोगेषु' इतिस्थाने '°लोभेषु' इति पाठः।
१६. १६ – 'नरके' इतिस्थाने 'निरये' इति प्रायः काश्मीरपाठः। अन्यास्वपि वङ्गीयादिमातृकासूपलभ्यते।
१६. १६ – '°ऽशुचौ' इतिस्थाने '°ऽशुभौ' इति प्रामादिकः पाठः, प्रायः '°ऽशुभे' इति भवेत्।
१६. १७ – '°संभाविताः' इतिस्थाने '°संभाविता' इति बह्वीषु मातृकासु पाठः।
१६. १७ – '°मदान्विताः' इतिस्थाने '°समन्विताः' इति पाठः।
१६. १७ – 'नामयज्ञैस्ते' इतिस्थाने 'कामयज्ञैस्ते' इति, 'मानयज्ञैस्तैर्' इति च पाठौ। क्वचिट्टीकासु 'नाम यज्ञैस्ते' इति विकल्पेन पदच्छेदो वर्तते।
१६. १७ – एकस्यां मातृकायां सप्तदशाध्यायस्थपञ्चमषष्ठश्लोकावतः परं पठितौ, सप्तदशाध्याये तु ते परित्यक्तौ।
१६. १८ – 'कामं क्रोधं' इतिस्थाने 'कामक्रोधे' इति पाठः।
१६. १८ – 'च संश्रिताः' इतिस्थाने 'समाश्रिताः' इति, 'च संस्थिताः' इति च पाठौ।
१६. १८ – 'मामात्मपर°' इतिस्थाने 'ममात्मापर°' इति पाठः।
१६. १८ – '°ऽभ्यसूयकाः' इतिस्थाने 'ह्यसूयकाः' इति, '°ऽभ्यसूयया' इति च पाठौ।

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ २१ ॥

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

---

१६. १९ – '°मशुभानासुरीष्वेव' इतिस्थाने '°मशुभास्वासुरीष्वेव' इति प्रायः काश्मीरपाठः । '°मशुभामासुरीष्वेव' इति, '°मशुभामासुरी चैव' इति च प्रामादिकौ ।

१६. २० – 'आसुरीं' इतिस्थाने 'आसुरी°' इति पाठः ।

१६. २० – '°मप्राप्यैव' इतिस्थाने '°मप्राप्य च' इति, '°मप्राप्येव' इति च पाठौ ।

१६. २० – 'यान्त्य°' इतिस्थाने 'यात्य°' इति पाठः ।

१६. २१ – 'त्रिविधं' इतिस्थाने 'त्रितयं' इति पाठः ।

१६. २१ – 'नरकस्येदं' इतिस्थाने 'नरकस्यैतद्' इति पाठः ।

१६. २१ – 'नाशन°' इतिस्थाने 'नाशक°' इति पाठः ।

१६. २१ – 'कामः क्रोध°' इतिस्थाने 'कामक्रोध°' इति पाठः ।

१६. २१ – 'त्यजेत्' इतिस्थाने 'त्यज' इति क्वचित् काश्मीरमातृकासु रामकण्ठानन्दवर्धनटीकयोश्च पाठः ।

१६. २२ – '°र्विमुक्तः' इतिस्थाने '°र्वियुक्तः' इति, '°र्विमुक्ताः' इति च पाठौ ।

१६. २२ – 'आचरत्या°' इतिस्थाने 'आचरन्त्या°' इति पाठः ।

१६. २२ – 'याति' इतिस्थाने 'यान्ति' इति पाठः ।

१६. २३ – 'यः' इतिस्थाने 'ये' इति पाठः ।

१६. २३ – 'वर्तते' इतिस्थाने 'वर्तन्ते' इति पाठः ।

१६. २३ – 'कामकारतः' इतिस्थाने 'कामचारतः' इति पाठः । 'कामकारकः' इति, 'कामकातरः' इति च प्रामादिकौ ।

१६. २३ – 'न परां' इतिस्थाने 'परमां' इति पाठः ।

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

---

१६. २४ – 'कार्याकार्य॰' इतिस्थाने 'कार्यं कार्य॰' इति पाठः ।

१६. २४ – 'ज्ञात्वा' इतिस्थाने 'कृत्वा' इति क्वचित् काश्मीरपाठः । रामकविनापि स एव स्वीकृतः ।

१६. २४ – 'कर्तुमिहार्हसि' इतिस्थाने 'कर्तुं त्वमर्हसि' इति पाठः ।

१६. पुष्पिकायाम् – 'दैवासुरसंपद्विभागयोगो' इतिस्थाने 'दैवासुरसंपद्विभागो' इति, 'देवासुरसंपद्विभागयोगो' इति, 'दैवासुरसंपद्विभो[भा]गो' इति, 'दैत्यासुरसंपद्विभागयोगो' इति, 'दैवासुरसंपद्विवेकयोगो' इति, 'देवासुरसंपद्विभागो[गयोः] प्रविवेकदर्शनो' इति, 'दैवासुरसंपत्तियोगो' इति, 'सत्ययोगो' इति, 'प्रकृतिविभागो' इति, 'प्रकृतिविभागयोगो' इति, 'दैन्यासुरसंपद्दैवासुरभूतसर्गवर्णनपूर्वकमासुरभावापन्नजन्तूनां दशानिरूपणं' इति च पाठभेदाः ।

## ॥ अथ सप्तदशोऽध्यायः ॥

अर्जुन उवाच ।

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

श्रीभगवानुवाच ।

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥

---

१७. १ – 'यजन्ते' इतिस्थाने 'वर्तन्ते' इति रामकविपाठः क्वचित् काश्मीरमातृकास्वपि दृश्यते ।

१७. १ – 'सत्त्वमाहो रजस्तमः' इतिस्थाने 'सत्त्वं मोहो रजस्तमाः' इति प्रामादिकः पाठः ।

१७. २ – 'स्वभावजा' इतिस्थाने 'स्वभावतः' इति पाठः ।

१७. २ – 'तां' इतिस्थाने 'ताः' इति रामकविपाठः, 'तान्' इत्यन्यत्रापि क्वचित् ।

१७. ३ – 'सर्वस्य' इतिस्थाने 'सत्त्वस्य' इति पाठः ।

१७. ३ – 'भारत' इतिस्थाने 'देहिनाम्' इति पाठः ।

१७. ३ – 'यच्छ्रद्धः' इतिस्थाने 'यः श्रद्धः' इति प्रामादिकः पाठः ।

१७. ३ – 'एव सः' इतिस्थाने 'एव च' इति पाठः ।

१७. ४ – 'सात्त्विकाः' इतिस्थाने 'सात्त्विकान्' इति पाठः ।

१७. ४ – 'राजसाः' इतिस्थाने 'राक्षसाः' इति पाठाः ।

१७. ४ – 'प्रेतान् भूतगणांश्चान्ये' इतिस्थाने 'भूतप्रेतपिशाचांश्च' इति, 'प्रेतभूतपिशाचांश्च' इति वा प्रायः काश्मीरपाठः । 'भूतान् प्रेतगणांश्चान्ये' इति च क्वचित् ।

१७. ४ – 'जनाः' इतिस्थाने 'गणाः' इति पाठः ।

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६ ॥

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

---

१७. ५ – 'तप्यन्ते ये तपो जनाः' इतिस्थाने 'तपस्तप्यन्ति ये जनाः' इति प्रायः काश्मीरपाठः । 'तपस्तप्यन्ति तामसाः' इति, 'तप्यन्ते ये तपोधनाः' इति च पाठौ ।

१७. ५ – 'दम्भाहंकार°' इतिस्थाने 'दम्भोऽहंकार°' इति पाठः ।

१७. ६ – 'कर्शयन्तः' इतिस्थाने 'कर्पयन्तः' इति बह्वीषु वङ्गदाक्षिणात्यादिमातृकासु पाठः ।

१७. ६ – '°मचेतसः' इतिस्थाने '°मचेतनम्' इति प्रायः काश्मीरपाठः । '°मचेतसम्' इति क्वचित् ।

१७. ७ – 'आहारस्त्वपि' इतिस्थाने 'आहारश्चापि' इति पाठः । 'आहारोऽपि' इत्यपि क्वचित् ।

१७. ७ – 'भेदमिमं' इतिस्थाने 'भेदमिदं' इति क्वचित् पाठः ।

१७. ८ – '°बलारोग्य°' इतिस्थाने '°बलारोग्यः' इति पाठः ।

१७. ८ – '°विवर्धनाः' इतिस्थाने 'विवर्धनः' इत्यानन्दवर्धनपाठः । तदनुकूलश्चोत्तरार्धेऽपि 'रस्यः स्निग्धः स्थिरो हृद्य आहारः सात्त्विकप्रियः' इत्येकवचनान्तः पाठः ।

१७. ८ – 'रस्याः स्निग्धाः' इतिस्थाने 'रस्यास्निग्धाः' इति, 'रस्यास्निग्धा°' इति च प्रामादिकौ पाठौ ।

१७. ९ – '°कट्वम्ललवणात्युष्ण°' इतिस्थाने '°कट्वम्ललवणाद्युष्ण°' इति पाठः । कट्वंस्वलवणात्युष्ण°' इत्यपि क्वचित् ।

१७. ९ – 'आहारा' इतिस्थाने 'आहारो' इति क्वचित् पाठः । न पुनस्तत्र विशेषणयोरेकवचनान्तः पाठो वर्तते ।

१७. ९ – 'राजसस्येष्टा' इतिस्थाने 'राजसश्रेष्ठा' इति पाठः ।

१७. ९ – 'दुःखशोका°' इतिस्थाने 'दुःखं शोका°' इति पाठः ।

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

---

१७. १० – 'पर्युषितं च यत्' इतिस्थाने 'पर्युषणेरितम्' इति पाठः ।
१७. ११ – '°काङ्क्षिभिर्यज्ञो' इतिस्थाने '°काङ्क्षिणा यज्ञो' इत्यानन्दवर्धनपाठः ।
१७. ११ – 'यष्टव्यमेवेति' इतिस्थाने 'यष्टव्य इत्येव' इति, 'यष्टव्यमित्येव' इति च पाठौ ।
१७. ११ – 'मनः' इतिस्थाने 'ततः' इति पाठः ।
१७. ११ – 'सात्त्विकः' इतिस्थाने 'सात्त्विकम्' इति पाठः ।
१७. १२ – 'अभिसंधाय' इतिस्थाने 'अभिसंध्येय' इति प्रामादिकः पाठः ।
१७. १२ – 'दम्भार्थं°' इतिस्थाने 'दम्भोऽर्थं' इति पाठः ।
१७. १२ – 'यत्' इतिस्थाने 'यः' इति प्रायः काश्मीरपाठः ।
१७. १२ – 'इज्यते' इतिस्थाने 'युज्यते' इति क्वचित् पाठः । 'इज्येत' इति त्वन्यत्र ।
१७. १२ – 'भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्' इतिस्थाने 'विद्धि तं यज्ञं राजसं चलमध्रुवम्' इति प्रायः काश्मीरपाठः । 'भरतश्रेष्ठ' इतिस्थाने 'भारतश्रेष्ठ' इति क्वचिदुपलभ्यते ।
१७. १३ – '°मसृष्टान्नं' इतिस्थाने '°ममृष्टान्नं' इति द्वित्रासु काश्मीरमातृकासु पाठः । '°मनुष्ठानं' इति, '°मसृष्टार्थं' इति चान्यत्र क्वचित् पाठः ।
१७. १३ – '°विरहितं' इतिस्थाने 'विवर्जितं' इति पाठः ।
१७. १३ – 'यज्ञं' इतिस्थाने 'यच्च' इति पाठः ।
१७. १५ – 'सत्यं प्रियहितं च' इतिस्थाने 'दम्भार्थमपि चैव' इति पाठः ।
१७. १५ – '°भ्यसनं' इतिस्थाने '°भ्यासनं' इति पाठः ।

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६ ॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

मूढग्राहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत् तामसमुदाहृतम् ॥ १९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत् तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।

---

१७. १६ – '°प्रसादः सौम्यत्वं' इतिस्थाने '°प्रसादसौम्यत्वं' इति पाठः ।
१७. १६ – '°संशुद्धिरित्येतत्' इतिस्थाने '°संशुद्धिरित्येनत्' इति पाठः ।
१७. १६ – 'मानसमुच्यते' इतिस्थाने 'मानस उच्यते' इति प्रामादिकः पाठः । 'दानं स उच्यते' इत्यपि च ।
१७. १७ – 'परया तप्तं' इतिस्थाने 'परयोपेतं' इति पाठः ।
१७. १७ – 'तपस्तत् त्रि°' इतिस्थाने 'तपस्तु त्रि°' इति पाठः । 'तत् तपस्त्रि°' इति त्वानन्दवर्धनपाठः ।
१७. १७ – '°र्युक्तैः' इतिस्थाने '°र्मुक्तैः' इति पाठः ।
१७. १७ – 'परिचक्षते' इतिस्थाने 'परिरक्षते' इति पाठः ।
१७. १८ – 'तदिह' इतिस्थाने 'यदिह' इति पाठः ।
१७. १९ – 'मूढग्राहेण' इतिस्थाने 'मूढग्रहेण' इति, 'मूढाग्रहेण' इति, 'गूढग्रहेण' इति च पाठाः ।
१७. १९ – '°तपः' इतिस्थाने 'नरैः' इति पाठः ।
१७. १९ – '°त्सादनार्थं' इतिस्थाने '°च्छादनार्थं' इति पाठः ।
१७. १९ – 'वा' इतिस्थाने 'च' इति पाठः ।
१७. १९ – 'तामसमुदा°' इतिस्थाने 'तामस उदा°' इति पाठः ।
१७. २० – 'देशे काले' इतिस्थाने 'देशकाले' इति, 'काले देशे' इति च पाठौ ।
१७. २० – 'स्मृतम्' इतिस्थाने 'विदुः' इति पाठः ।
१७. २१ – '°मुद्दिश्य' इतिस्थाने '°मुद्यम्य' इति पाठः ।

दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥ २२ ॥

ॐ तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥

तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥

---

१७. २१ – 'परिक्लिष्टं' इतिस्थाने 'परिक्लुष्टं' इति पाठः ।
१७. २१ – 'तद्दानं राजसं स्मृतम्' इतिस्थाने 'तद्राजसमिति स्मृतम्' इति, 'तद्राजसमुदाहृतम्' इति च काश्मीरद्राविडपाठौ ।
१७. २२ – '°मपात्रेभ्यश्च' इतिस्थाने '°मपात्रेभ्यः प्र°' इति पाठः ।
१७. २२ – '°मवज्ञातं' इतिस्थाने 'मवज्ञातुं' इति, '°मविज्ञातं' इति च पाठौ ।
१७. २२ – 'तत् तामसमुदाहृतम्' इतिस्थाने 'तद्दानं तामसं स्मृतम्' इति पाठः ।
१७. २३ – 'निर्देशो' इतिस्थाने 'निर्दिष्टो' इति पाठः ।
१७. २३ – 'ब्रह्मण°' इतिस्थाने 'ब्राह्मण°' इति पाठः ।
१७. २३ – 'ब्राह्मणास्तेन' इतिस्थाने 'ब्रह्मणा तेन' इति प्रायः काश्मीरपाठः ।
१७. २३ – 'पुरा' इतिस्थाने 'पराः' इति पाठः ।
१७. २४ – 'यज्ञ°' इतिस्थाने 'यज्ञः' इति पाठः ।
१७. २४ – '°दान°' इतिस्थाने '°दानं' इति पाठः ।
१७. २४ – 'प्रवर्तन्ते' इतिस्थाने 'प्रवर्तन्त' इति पाठः ।
१७. २५ – 'यज्ञतपः क्रियाः' इतिस्थाने 'यज्ञास्तपःक्रियाः' इति, 'यज्ञक्रियास्तपः' इति, 'यज्ञस्तपः क्रियाः' इति च पाठाः ।
१७. २६ – 'प्रयुज्यते' इतिस्थाने 'प्रदीयते' इति पाठः ।
१७. २६ – 'प्रशस्ते' इतिस्थाने 'प्रशस्त°' इति पाठः ।
१७. २६ – 'तथा' इतिस्थाने 'तदा' इति, 'यथा' इति च पाठौ ।
१७. २६ – 'सच्छब्दः' इतिस्थाने 'सच्छन्दः' इति, 'स शब्दः' इति च पाठौ ।
१७. २६ – 'पार्थ युज्यते' इतिस्थाने 'पार्थ गीयते' इति प्रायः काश्मीरपाठः । 'परिपठ्यते' इत्यानन्दवर्धनपाठः ।

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह ॥ २८ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥

---

१७. २७ – 'यज्ञे' इतिस्थाने 'यत्ते' इति पाठः ।
१७. २७ – 'दाने' इतिस्थाने 'दानं' इति पाठः ।
१७. २७ – 'चोच्यते' इतिस्थाने 'वोच्यते' इति, 'चोद्यते' इति, 'चोइयते' इति च पाठाः ।
१७. २७ – '°त्येवाभिधीयते' इतिस्थाने '°त्येवं विधीयते' इति पाठः ।
१७. २८ – 'दत्तं' इतिस्थाने 'दानं' इति पाठः ।
१७. २८ – 'असदित्यु°' इतिस्थाने 'असतीत्यु°' इति पाठः ।
१७. २८ – 'न च तत्' इतिस्थाने 'न चैतत्' इति पाठः ।
१७. पुष्पिकायाम्—'श्रद्धात्रयविभागयोगो' इतिस्थाने 'श्रद्धात्रयविभागो इति, 'श्रद्धात्रिविधयोगो' इति, 'त्रिविधश्रद्धावर्णनो' इति, 'श्रद्धाविवेकयोगो' इति, 'गुणकर्मश्रद्धाविवेकयोगो' इति, 'गुणत्रयविभागयोगो' इति, 'कर्मगुणविभागयोगो' इति, 'गुणभेदयोगो' इति, 'गुणविभागयोगो' इति, 'गुणभेदविभागयोगो' इति, 'प्रकृतिगुणसंयोगो' इति, 'शास्त्रयोगो' इति, 'सिद्धान्तयोगो' इति च पाठभेदाः ।

## ॥ अथाष्टादशोऽध्यायः ॥

---

अर्जुन उवाच ।

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ १ ॥

श्रीभगवानुवाच ।

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

---

१८. १ – 'केशिनिषूदन' इतिस्थाने 'केशिनिसूदन' इति वङ्गनेपालकाश्मीरदाक्षिणात्यादिमातृकासु पाठः । 'कर्मनिषूदन' इत्येकस्यां द्राविडमातृकायां पाठः ।
१८. २ – 'न्यासं' इतिस्थाने 'त्यागं' इति पाठः ।
१८. ३ – 'त्याज्यं' इतिस्थाने 'त्यागं' इति पाठः ।
१८. ३ – 'दोष°' इतिस्थाने 'मोक्ष°' इति पाठः ।
१८. ३ – '°त्येके' इतिस्थाने '°त्येते' इति पाठः ।
१८. ३ – '°र्मनीषिणः' इतिस्थाने '°र्विचक्षणः[णाः]' इति पाठः ।
१८. ३ – 'चापरे' इतिस्थाने 'वापरे' इति पाठः ।
१८. ४ – 'निश्चयं' इतिस्थाने 'निश्चयः' इति पाठः ।
१८. ४ – 'भरत°' इतिस्थाने 'भारत°' इति पाठः ।
१८. ४ – 'संप्रकीर्तितः' इतिस्थाने 'संप्रदर्शितः' इति, 'परिकीर्तितः' इति च पाठौ ।
१८. ५ – 'यज्ञदानतपः°' इतिस्थाने 'यज्ञो दानं तपः°' इति वङ्गपाठोऽन्यत्रापि दृश्यते ।

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६ ॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥

न द्वेष्टयकुशलं कर्म कुशले नानुषज्जते।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥

---

१८. ६ – 'तु कर्माणि' इतिस्थाने 'च कर्माणि' इति काश्मीरमातृकासु प्रायः पाठः, क्वचिदन्यत्रापि।
१८. ६ – 'सङ्गं त्यक्त्वा' इतिस्थाने 'त्यक्त्वा सङ्गं' इति पाठः।
१८. ६ – 'मत°' इतिस्थाने 'व्रत°' इति पाठः।
१८. ७ – 'तु संन्यासः' इतिस्थाने 'च संन्यासः' इति प्रायः काश्मीरपाठः।
१८. ७ – 'नोपपद्यते' इतिस्थाने 'नोपलभ्यते' इति पाठः।
१८. ७ – 'मोहात् तस्य' इतिस्थाने 'मोहात्तस्य' इति पाठः।
१८. ७ – 'परिकीर्तितः इतिस्थाने 'परिकीर्त्यते' इति पाठः।
१८. ८ – 'यत् कर्म' इतिस्थाने 'यः कर्म' इति रामकविपाठः, क्वचिदन्यत्र काश्मीरमातृकासु दृश्यते।
१८. ८ – 'कायक्लेश°' इतिस्थाने 'कार्यं क्लेश°' इति, 'कालक्लेश°' इति च पाठौ।
१८. ८ – 'राजसं' इतिस्थाने 'राजसात्' इति पाठः।
१८. ८ – 'त्यागफलं' इतिस्थाने 'तत्र फलं' इत्यानन्दवर्धनपाठः।
१८. ८ – 'लभेत्' इतिस्थाने 'भवेत्' इति पाठः।
१८. ९ – 'क्रियते' इतिस्थाने 'कुरुते' इति नेपालपाठः, क्वचिदन्यत्रापि दृश्यते।
१८. ९ – 'त्यागः' इतिस्थाने 'त्यागी' इति पाठः।
१८. ९ – 'सात्त्विको मतः' इतिस्थाने 'सात्त्विकः स्मृतः' इति पाठः।
१८. १० – 'द्वेष्ट्यकुशलं' इतिस्थाने 'द्वेष्टि कुशलं' इति पाठः।
१८. १० – '°षज्जते' इतिस्थाने '°षज्जति' इति पाठः।
१८. १० – 'सत्त्वसमाविष्टो' इतिस्थाने 'सत्यसमाविष्टो' इति, सत्त्वसमायुक्तो इति च पाठौ।
१८. १० – 'मेधावी छिन्न°' इतिस्थाने 'मेधाविच्छिन्न°' इति नेपालपाठः।

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥

शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥

तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

---

१८. ११ – 'देहभृता' इतिस्थाने 'देहकृता' इति, 'देवभृता' इति, 'देहभृतां' इति च पाठाः ।

१८. ११ – 'यस्तु' इतिस्थाने 'यत् तु' इति पाठः ।

१८. १२ – 'भवत्यत्यागिनां' इतिस्थाने 'भवत्यसङ्गिनां' इति पाठः ।

१८. १३ – 'पञ्चैतानि' इतिस्थाने 'पञ्चेमानि' इति वङ्गदाक्षिणात्यपाठः । क्वचित् काश्मीरमातृकास्वपि दृश्यते ।

१८. १३ – 'महाबाहो' इतिस्थाने 'महाभाग' इति पाठः ।

१८. १४ – 'करणं' इतिस्थाने 'कारणं' इति पाठः ।

१८. १४ – 'विविधाश्च' इतिस्थाने 'विविधा च' इति क्वचिद्द्राविडपाठः । आनन्दवर्धनमातृकायां तथा क्वचिदन्यत्राप्युपलभ्यते ।

१८. १४ – 'दैवं चैवात्र' इतिस्थाने 'दैवमेवात्र' इति कासुचन काश्मीरमातृकासु पाठः ।

१८. १५ – '°र्यत् कर्म प्रारभते नरः' इतिस्थाने '°र्हि यत् कर्मारभतेऽर्जुन' इति कासुचित् काश्मीरमातृकासु पाठः । '°र्यत् कर्म प्रारभतेऽर्जुन' इति क्वचिद्द्राविडपाठः । '°र्यत् कर्म प्रारभते नर' इति मातृकान्तरे ।

१८. १५ – 'न्याय्यं' इतिस्थाने 'न्यायं' इति पाठः ।

१८. १५ – 'पञ्चैते' इतिस्थाने 'पञ्च ते' इति पाठः ।

१८. १६ – 'तत्रैवं' इतिस्थाने 'तत्रैव' इति पाठः ।

१८. १६ – 'यः' इतिस्थाने 'यत्' इति क्वचिद्दाक्षिणात्यमातृकासु पाठः ।

१८. १६ – 'पश्यत्यकृत°' इतिस्थाने 'पश्यति कृत°' इति, 'पश्यते कृत°' इति च पाठौ ।

१८. १६ – 'स पश्यति' इतिस्थाने 'संपश्यति' इति पाठः ।

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते ॥ १७ ॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥

---

१८. १७ – 'बुद्धिर्यस्य न' इतिस्थाने 'यस्य बुद्धिर्न' इति पाठः ।
१८. १७ – 'हत्वापि' इतिस्थाने 'हित्वापि' इति पाठः ।
१८. १७ – 'न हन्ति' इतिस्थाने 'निहन्ति' इति पाठः ।
१८. १८ – 'ज्ञेयं परि°' इतिस्थाने 'ज्ञेयपरि°' इति पाठः ।
१८. १८ – '°चोदना' इतिस्थाने '°नोदना' इति, '°चेतना' इति, '°वेदना' इति च पाठाः ।
१८. १८ – 'करणं' इतिस्थाने 'कारणं' इति पाठः ।
१८. १८ – 'त्रिविधः' इतिस्थाने 'त्रिविधं' इति पाठः ।
१८. १८ – '°संग्रहः' इतिस्थाने '°संग्रहं' इति पाठः । '°संश्रयः' इत्यानन्दवर्धनमातृकायां पाठः ।
१८. १९ – 'त्रिधैव' इतिस्थाने 'त्रिधेव' इति, 'त्रिविधा' इति च पाठौ ।
१८. १९ – 'प्रोच्यते' इतिस्थाने 'प्रोच्यन्ते' इत्यानन्दवर्धनपाठः। 'प्राप्यते' इति क्वचित्।
१८. २० – '°मव्ययमीक्षते' इतिस्थाने '°मव्यक्तमीक्षते' इति नेपालपाठः । '°मव्ययमीक्ष्यते' इति, '°मव्ययमश्नुते' इति, '°मव्ययं वीक्षते' इत्यपरे पाठभेदाः ।
१८. २० – 'तज्ज्ञानं' इतिस्थाने 'यज्ज्ञानं' इति पाठः ।
१८. २० – 'विद्धि सात्त्विकम्' इतिस्थाने 'सात्त्विकं स्मृतम्' इति पाठः ।
१८. २१ – 'तु' इतिस्थाने 'च' इति पाठः ।
१८. २१ – 'यज्ज्ञानं नाना°' इतिस्थाने 'तज्ज्ञानं नाना°' इति पाठः । 'यज्ज्ञानाज्ञाना°' इति च ।
१८. २१ – '°भावान्' इतिस्थाने '°भाव°' इति पाठः ।
१८. २१ – 'भूतेषु' इतिस्थाने 'भावेषु' इति पाठः ।
१८. २१ – 'तज्ज्ञानं विद्धि राजसम्' इतिस्थाने 'तद्राजसमिति स्मृतम्' इति कासुचन काश्मीरमातृकासु पाठः ।

यत् तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहेतुकम् ।
अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ॥ २२ ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥ २३ ॥

यत् तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ २५ ॥

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥

---

१८. २२ – 'यत् तु कृत्स्नवदेक°' इतिस्थाने 'यदकृत्स्नविदेक° इति, 'यस्त्वकृत्स्नविदेक°' इति च काश्मीरटीकासु पाठौ । 'यत् तु कृत्स्नस्तदेक°' इति च क्वचित् ।

१८. २२ – 'कार्ये' इतिस्थाने 'कार्य°' इति पाठः ।

१८. २२ – 'महेतुकम्' इतिस्थाने '°महैतुकम्' इति प्रायः काश्मीरपाठः । अन्यत्राप्युपलभ्यते ।

१८. २२ – 'अतत्त्वार्थवदल्पं' इतिस्थाने 'अतत्त्वार्थविदल्पं इति पाठः ।

१८. २२ – 'तत् तामससमुदाहृतम्' इतिस्थाने 'तज्ज्ञानं विद्धि तामसम्' इति पाठः ।

१८. २३ – 'सात्त्विक°' इतिस्थाने 'तामस°' इति प्रामादिकः पाठः ।

१८. २४ – 'कामेप्सुना' इतिस्थाने 'कालेप्सुना' इति पाठः ।

१८. २४ – 'साहंकारेण' इतिस्थाने 'साहंक्रूरेण' इति पाठः ।

१८. २४ – 'वा' इतिस्थाने 'वै' इति पाठः ।

१८. २४ – 'बहुलायासं' इतिस्थाने 'क्लेशबहुलं' इति प्रायः काश्मीरपाठः ।

१८. २४ – '°मुदाहृतम्' इतिस्थाने '°मिति स्मृतम्' इति प्रायः काश्मीरपाठः ।

१८. २५ – 'अनुबन्धं' इतिस्थाने 'अनुबन्ध°' इति पाठः ।

१८. २५ – '°मनपेक्ष्य' इतिस्थाने '°मनवेक्ष्य' इति प्रायः काश्मीरपाठः । अन्यत्राप्येवं दृश्यते । '°मनवीक्ष्य' तथा '°मनवे[पि]क्ष' इति तु प्रामादिकौ ।

१८. २५ – '°दारभ्यते' इतिस्थाने '°दारभते' इति पाठः ।

१८. २५ – 'यत् तत् तामसमुच्यते' इतिस्थाने 'तत् तामसमुदाहृतम्' इति कासुचिन्मातृकासु पाठः ।

१८. २६ – 'धृत्युत्साह°' इतिस्थाने 'दक्साहस°' इति पाठः ।

१८. २६ – '°निर्विकारः' इतिस्थाने '°र्निराकारं' इति पाठः ।

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥

---

१८. २७ – 'रागी' इतिस्थाने 'रागे' इति पाठः ।
१८. २७ – '°लुंब्धो' इतिस्थाने '°लंब्धो' इति, '°लंब्धा' इति च प्रामादिकौ पाठौ ।
१८. २७ – 'हिंसात्मको' इतिस्थाने 'हिंसात्मके' इति पाठः ।
१८. २७ – 'परिकीर्तितः' इतिस्थाने 'परिकीर्त्यते' इति रामकविपाठः ।
१८. २८ – 'नैकृतिको' इतिस्थाने 'वैकृतिको' इति, 'नैष्कृतिको' इति च पाठौ ।
१८. २८ – 'दीर्घसूत्री च' इतिस्थाने 'दीर्घसूत्रश्च' इति प्रायः काश्मीरटीकासु पाठः ।
१८. २९ – 'बुद्धेर्भेदं' इतिस्थाने 'बुद्धिभेदो' इति पाठः ।
१८. २९ – 'धृतेश्चैव' इतिस्थाने 'धृतिश्चैव' इति पाठः ।
१८. २९ – 'गुणतस्त्रिविधं' इतिस्थाने 'गुणतस्तु विधिं' इति पाठः । 'त्रैविध्यं गुणतः' इति त्वानन्दवर्धनपाठः ।
१८. ३० – 'कार्याकार्ये' इतिस्थाने 'कार्याकार्य°' इति पाठः ।
१८. ३० – 'बन्धं मोक्षं' इतिस्थाने 'मोक्षं बन्धं' इति, 'बन्धुमोक्षं' इति च पाठौ ।
१८. ३० – 'या' इतिस्थाने 'यो' इति प्रामादिकः पाठः ।
१८. ३० – 'वेत्ति बुद्धिः सा पार्थ सात्त्विकी' इतिस्थाने 'वेत्ति बुद्धिः सा सात्त्विकी मता' इति, 'बुद्धिर्वेद सा सात्त्विकी मता' इति वा प्रायः काश्मीरपाठः ।
१८. ३१ – 'यया' इतिस्थाने 'यथा' इति पाठः ।
१८. ३१ – 'चाकार्य°' इतिस्थाने 'वाकार्य°' इति नेपालपाठः, क्वचित् काश्मीरमातृकास्वपि दृश्यते ।
१८. ३१ – 'अयथावत् प्रजानाति' इतिस्थाने 'यथावन्नाभिजानाति' इति क्वचित् पाठः । 'अथ यावत् प्रजानाति' इति तु प्रामादिकः ।

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥

---

१८. ३२ – 'अधर्मं धर्मं°' 'अधर्म्यं धर्म्यं°' इति दाक्षिणात्यपाठः ।

१८. ३२ – 'मन्यते तमसावृता' इतिस्थाने 'बुध्यते तमसान्विता' इति काश्मीरटीकासु पाठः ।

१८. ३२ – 'विपरीतांश्च' इतिस्थाने 'विपरीतांस्तु' इति पाठः ।

१८. ३२ – 'पार्थ तामसी' इतिस्थाने 'तामसी मता' इति काश्मीरटीकासु पाठः ।

१८. ३३ – 'यया' इतिस्थाने 'यथा' इति पाठः ।

१८. ३३ – 'धारयते' इतिस्थाने 'धारयति' इति पाठः ।

१८. ३३ – '°प्राणेन्द्रिय°' इतिस्थाने '°प्राणेन्द्रियाः' इति पाठः ।

१८. ३३ – 'योगेनाव्यभिचारिण्या' इतिस्थाने 'योगे न व्यभिचारिण्या' इति, 'योगेनाव्यभिचारेण' इति च पाठौ ।

१८. ३३ – 'पार्थ सात्त्विकी' इतिस्थाने 'सात्त्विकी मता' इति क्वचित् काश्मीरपाठः ।

१८. ३४ – 'यया' इतिस्थाने 'यथा' इति पाठः ।

१८. ३४ – 'तु धर्मं°' इतिस्थाने 'तु कर्मं°' इति, '°र्थंबुद्धि°' इति च पाठौ ।

१८. ३४ – '°कामार्थान्' इतिस्थाने '°कामार्थं' इति पाठः ।

१८. ३४ – 'प्रसङ्गेन' इतिस्थाने 'प्रसङ्गी न' इति, 'प्रसङ्गेना°' इति, 'प्रसन्नेन' इति च पाठाः ।

१८. ३४ – 'सा' इतिस्थाने 'या' इति पाठः ।

१८. ३५ – 'यया' इतिस्थाने 'यथा' इति पाठः ।

१८. ३५ – 'स्वप्नं' इतिस्थाने 'स्वप्न°' इति, 'स्वास्थ्यं' इति च पाठौ ।

१८. ३५ – 'शोकं' इतिस्थाने 'क्रोधं' इति पाठः ।

१८. ३५ – 'मदमेव च' इतिस्थाने 'मदमेव वा' इति, 'मोहमेव च' इति, 'दममेव च' इति च । पाठाः ।

१८. ३५ – 'पार्थं तामसी' इतिस्थाने 'तामसी स्मृता' इति, 'तामसी मता' इति वा प्रायः काश्मीरपाठः । शाङ्करभाष्यमातृकास्वपि क्वचित् 'तामसी मता' इति पाठो दृश्यते ।

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

यत् तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥

विषयेन्द्रियसंयोगाद्यत् तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८ ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत् तामसमुदाहृतम् ॥ ३९ ॥

न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४० ॥

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥

शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥

---

१८. ३६ – 'त्रिविधं शृणु मे' इतिस्थाने 'शृणु मे त्रिविधं' इति प्रायः काश्मीरटीकासु पाठः ।
१८. ३६ – 'च निगच्छति' इतिस्थाने 'न निगच्छति' इति, 'च न गच्छति' इति च पाठौ । 'च नियच्छति' इति प्रायः वङ्गकाश्मीरमातृकासु पाठः ।
१८. ३७ – 'यत्' इतिस्थाने 'तत्' इति पाठः ।
१८. ३७ – 'तदग्रे' इतिस्थाने 'तदात्वे' इति प्रायः काश्मीरपाठः ।
१८. ३७ – 'प्रोक्तमात्म°' इतिस्थाने 'विद्यादात्म°' इति प्रायः काश्मीरपाठः ।
१८. ३८ – 'तदग्रे' इतिस्थाने 'तदात्वे' इति प्रायः काश्मीरपाठः ।
१८. ३८ – 'तत् सुखं राजसं' इतिस्थाने 'तद्राजसमिति' इति प्रायः काश्मीरपाठः ।
१८. ३९ – 'तामसमुदाहृतम्' इतिस्थाने 'सुखं तामसं स्मृतम्' इति पाठः ।
१८. ४० – 'पृथिव्यां वा' इतिस्थाने 'पृथिव्यां नो' इति, 'पृथिव्यां च' इति च पाठौ ।
१८. ४० – 'पुनः' इतिस्थाने 'क्वचित्' इति पाठः ।
१८. ४१ – 'प्रविभक्तानि' इतिस्थाने 'प्रविभुक्तानि' इति पाठः ।
१८. ४२ – '°स्तपः' इतिस्थाने '°स्तथा' इति पाठः ।
१८. ४२ – 'ब्रह्म°' इतिस्थाने 'ब्राह्मं' इति काश्मीरटीकासु पाठः ।
१८. ४२ – 'स्वभावजम्' इतिस्थाने 'सुभावजम्' इति, 'प्रभावजम्' इति च पाठौ ।

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षत्त्रकर्म स्वभावजम् ॥ ४३ ॥

कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

---

१८. ४३ – 'शौर्यं' इतिस्थाने 'शौर्य°' इति पाठः ।
१८. ४३ – '°र्दाक्ष्यं' इतिस्थाने '°र्दार्ढ्यं' इति, '°र्दक्षं' इति पाठौ ।
१८. ४३ – 'चाप्यपलायनम्' इतिस्थाने 'वाप्यपलायनम्' इति पाठः ।
१८. ४३ – '°मीश्वरभाव°' इतिस्थाने '°मैश्वरभाव°' इति, '°मीश्वरभावा°' इति च पाठौ ।
१८. ४३ – 'क्षत्त्र°' इतिस्थाने 'क्षात्त्रं' इति प्रायः काश्मीरद्राविडपाठः ।
१८. ४३ – 'स्वभावजम्' इतिस्थाने 'सुभावजम्' इति पाठः ।
१८. ४४ – '°गौरक्ष्य°' इतिस्थाने '°गोरक्ष्य°' इति, '°गोरक्ष°' इति च बहुशः पाठः ।
१८. ४४ – '°गौरक्ष्यवाणिज्यं°' इतिस्थाने '°वाणिज्यगोरक्षं' इति नेपालपाठः ।
१८. ४४ – 'वैश्य°' इतिस्थाने 'वैश्यं' इति पाठः ।
१८. ४४ – 'परिचर्यात्मकं' इतिस्थाने 'पर्युत्थानात्मकं' इति प्रायः काश्मीरपाठः । 'परिचर्यात्मिकं' इति क्वचिदन्यत्र ।
१८. ४४ – 'शूद्रस्यापि' इतिस्थाने 'शूद्रं कर्म' इति पाठः ।
१८. ४५ – 'नरः' इतिस्थाने 'पराम्' इति पाठः ।
१८. ४५ – 'स्वकर्मनिरतः' इतिस्थाने 'स्वकर्मणि रतः' इति पाठः ।
१८. ४५ – 'सिद्धिं' इतिस्थाने 'शुद्धिं' इति पाठः ।
१८. ४५ – 'स्वकर्मनिरतः सिद्धिं' इतिस्थाने 'अथातः संप्रवक्ष्यामि' इति पाठः ।
१८. ४६ – 'प्रवृत्तिः' इतिस्थाने 'प्रवृत्ति°' इति प्रामादिकः पाठः, तथा 'प्रवृत्तिं' इति ।
१८. ४६ – 'सर्व°' इतिस्थाने 'विश्व°' इति पाठः ।
१८. ४६ – 'स्वकर्मणा' इतिस्थाने 'अकर्मणा' इति पाठः ।
१८. ४६ – 'तमभ्यर्च्य' इतिस्थाने 'तमेवार्च्य' इति काश्मीरटीकासु पाठः ।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन् नाप्नोति किल्बिषम् ॥ ४७ ॥

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

---

१८. ४७ – 'विगुणः' इतिस्थाने 'विगुणात्' इति क्वचिद्दाक्षिणात्यमातृकासु पाठः ।

१८. ४७ – 'स्वनुष्ठितात्' इतिस्थाने 'सुनिष्ठितात्' इति पाठः ।

१८. ४७ पू (*½) – अस्य ४७ श्लोकस्य पूर्वोत्तरार्धयोर्मध्येऽधिका ३. ३५ श्लोकस्योत्तरार्धानुगन्धिनी पङ्क्तिः क्वचित् काश्मीरमातृकासु यथा—
'स्वधर्मे निधनं श्रेयः परधर्मोदयादपि' ।

१८. ४८ – '°वावृताः' इतिस्थाने '°वावृतः' इति नेपालपाठः । क्वचित् काश्मीरादिमातृकास्वपि दृश्यते ।

१८. ४९ – 'असक्त°' इतिस्थाने 'असक्तः' इति, 'असक्ति°' इति च प्रामादिकौ पाठौ ।

१८. ४९ – 'नैष्कर्म्य°' इतिस्थाने 'निष्कर्म°' इति पाठः ।

१८. ५० – 'सिद्धिं' इतिस्थाने 'सिद्धि°' इति पाठः ।

१८. ५० – 'सिद्धिं प्राप्तो यथा ब्रह्म' इतिस्थाने 'सिद्धिमाप्नोति च यथा' इति पाठः ।

१८. ५० – 'तथाप्नोति निबोध मे' इतिस्थाने 'प्राप्नोति तन्निबोध मे' इति क्वचन काश्मीरमातृकासु पाठः । 'तदाप्नोति निबोध मे' इति, 'तथा प्राप्नोति बोध मे' इति च पाठभेदौ ।

१८. ५० – 'समासेनैव' इतिस्थाने 'समासेन तु ' इति प्रायः काश्मीरपाठः ।

१८. ५० – 'ज्ञानस्य' इतिस्थाने 'ध्यानस्य' इति पाठः ।

१८. ५० – 'या परा' इतिस्थाने 'चापरा' इति पाठः ।

१८. ५१ – 'शब्दादीन् विषयां°' इतिस्थाने 'शब्दादिविषयां°' इति पाठः ।

१८. ५१ – 'व्युदस्य' इतिस्थाने 'नियम्य' इति पाठः ।

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।

---

१८. ५२ – 'लघ्वाशी' इतिस्थाने 'लब्धाशी' इति पाठः ।
१८. ५२ – 'यत°' इतिस्थाने 'जित°' इति पाठः ।
१८. ५२ – '°मानसः' इतिस्थाने '°मानसम्' इति पाठः ।
१८. ५२ – 'समुपाश्रितः' इतिस्थाने 'परमास्थितः' इति पाठः ।
१८. ५३ – 'कामं क्रोधं' इतिस्थाने 'कामक्रोधौ' इति पाठः ।
१८. ५३ – '°भूयाय' इतिस्थाने '°भूताय' इति पाठः ।
१८. ५३ – 'कल्पते' इतिस्थाने 'कल्प्यते' इति पाठः ।
१८. ५४ – 'काङ्क्षति' इतिस्थाने 'हृष्यति' इति प्रायः काश्मीरपाठः, शाङ्करभाष्ये पाठान्तरत्वेन निर्दिष्टः ।
१८. ५४ – 'मद्भक्तिं' इतिस्थाने 'सद्भक्तिं' इति पाठः ।
१८. ५५ – 'यावान्' इतिस्थाने 'योऽहं' इति प्रायः काश्मीरपाठः । 'यावद्' इत्यपि क्वचित् ।
१८. ५५ – 'ततो मां' इतिस्थाने 'ततोऽसौ' इति पाठः ।
१८. ५५ – 'ज्ञात्वा' इतिस्थाने 'ज्ञाता' इति पाठः ।
१८. ५५ – 'विशते' इतिस्थाने 'विशते च' इति पाठः ।
१८. ५६ – 'सदा' इतिस्थाने 'तदा' इति, 'नरः' इति च पाठौ ।
१८. ५६ – '°मव्ययम्' इतिस्थाने '°मात्मनः' इति पाठः ।
१८. ५७ – 'मत्परः' इतिस्थाने 'भारत' इति प्रायः काश्मीरपाठः ।

बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि ।
अथ चेत् त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६० ॥

---

१८. ५७ – 'बुद्धि॰' इतिस्थाने 'शुद्धि॰' इति क्वचित् पाठः ।
१८. ५७ – '॰योगमुपाश्रित्य' इतिस्थाने '॰योगमपाश्रित्य' इति वङ्गद्राविडनेपालपाठः, '॰योगं समाश्रित्य' इति च प्रायः काश्मीरपाठः ।
१८. ५८ – '॰दुर्गाणि' इतिस्थाने '॰कर्माणि' इति, '॰दुःखानि' इति च पाठौ ।
१८. ५८ – 'त्वमहंकारान्न श्रोष्यसि' इतिस्थाने 'तमहंकारान्न श्रोष्यसि' इति पाठः । 'त्वमहंकारं न मोक्ष्यसि' इति प्रायः काश्मीरपाठः ।
१८. ५८ – 'विनङ्क्ष्यसि' इतिस्थाने 'न काङ्क्षसि' इति पाठः ।
१८. ५९ – 'यदहंकारमाश्रित्य' इतिस्थाने 'यद्यहंकारमाश्रित्य' इति, 'याहंकारमुपाश्रित्य' इति च पाठौ ।
१८. ५९ – 'योत्स्य इति' इतिस्थाने 'योत्स्यामीति' इति, 'योत्स्यामिति' इति च पाठौ ।
१८. ५९ – 'मन्यसे' इतिस्थाने 'मन्यते' इति पाठः ।
१८. ५९ – 'मिथ्यैष व्यवसायस्ते' इतिस्थाने 'मिथ्यैव व्यवसायस्ते' इति, 'मिथ्यैवाध्यवसायस्ते' इति, 'मय्येव व्यवसायस्ते' इति च पाठाः ।
१८. ५९ – '॰स्त्वां' इतिस्थाने '॰स्त्वा' इति पाठः । '॰स्त्वं' इति च क्वचित् ।
१८. ५९ – 'नियोक्ष्यति' इतिस्थाने 'नियोक्ष्यते' इति, 'निरक्ष्यति' इति, 'न योक्ष्यति' इति, 'नियोक्ष्यसि' इति च पाठाः ।
१८. ६० – 'स्वभावजेन' इतिस्थाने 'स्वभावाद्येन' इति, 'स्वभावज्ञेन' इति च पाठौ ।
१८. ६० – 'कर्तुं नेच्छसि' इतिस्थाने 'कर्तुमिच्छसि' इति पाठः ।
१८. ६० – 'यन्मोहात्' इतिस्थाने 'तन्मोहात्' इति पाठः ।
१८. ६० – 'करिष्यस्यवशो' इतिस्थाने 'करिष्यसि वशो' इति, 'करिष्यत्यवशो' इति च पाठौ ।
१८. ६० – 'तत्' इतिस्थाने 'सन्' इति प्रायः काश्मीरपाठः ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥

इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

---

१८. ६१ – 'हृद्देशेऽर्जुन तिष्ठति' इतिस्थाने 'हृद्देशे वसतेऽर्जुन' इति, 'हृद्येष वसतेऽर्जुन' इति च प्रायः काश्मीरपाठौ । 'हृदयेऽर्जुन तिष्ठति' इति तु नेपालपाठः ।

१८. ६१ – 'यन्त्रारूढानि' इतिस्थाने 'यन्त्रारूढानि' इति पाठः ।

१८. ६१ – 'मायया' इतिस्थाने '°मानव' इति पाठः ।

१८. ६२ – 'गच्छ' इतिस्थाने 'गच्छन्' इति पाठः ।

१८. ६२ – 'भारत' इतिस्थाने 'पाण्डव' इत्यानन्दवर्धनपाठः ।

१८. ६२ – 'तत्प्रसादात्' इतिस्थाने 'मत्प्रसादात्' इति पाठः ।

१८. ६२ – 'परां' इतिस्थाने 'परं' इति पाठः ।

१८. ६२ – 'शान्तिं' इतिस्थाने 'सिद्धिं' इति रामकविपाठः, क्वचिदन्यकाश्मीरमातृकास्वपि दृश्यते ।

१८. ६२ – 'प्राप्स्यसि' इतिस्थाने 'प्राप्स्यति' इति पाठः ।

१८. ६३ – 'इति ते ज्ञान°' इतिस्थाने 'इदं ते ध्यान°' इति पाठः ।

१८. ६३ – 'गुह्याद्गुह्य°' इतिस्थाने 'गुह्यगुह्य°' इति पाठः ।

१८. ६३ – 'विमृश्यैत°' इतिस्थाने 'विमृष्यैत°' इति पाठः ।

१८. ६३ – 'यथेच्छसि' इतिस्थाने 'यदिच्छसि' इति क्वचित् काश्मीरमातृकासु पाठः ।

१८. ६४ – 'सर्वं°' इतिस्थाने 'सर्वं' इति पाठः ।

१८. ६४ – 'इष्टोऽसि मे दृढमिति' इतिस्थाने 'इष्टोऽसि मे दृढ इति' इति रामानुजपाठः द्राविडमातृकासु क्वचिदुपलभ्यते । 'इष्टोऽसि मे दृढमतिम्' इति नेपालपाठः क्वचित् काश्मीरमातृकास्वपि दृष्टः । 'इष्टोऽसि मे दृढमतम्' इति तु प्रामादिकः, तथा 'इष्टोऽसि दृढमिति च' इत्यपि ।

१८. ६५ – 'मन्मना' इतिस्थाने 'सन्मना' इति पाठः ।

१८. ६५ – 'मामेवैष्यसि' इतिस्थाने 'मामेवेष्यसि' इति पाठः ।

१८. ६५ – 'प्रतिजाने' इतिस्थाने 'प्रतिजाते' इति पाठः ।

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥

न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ ७१ ॥

---

१८. ६६ – 'शरणं' इतिस्थाने 'कारणं' इति यवद्वीपपाठः ।
१८. ६६ – 'त्वा' इतिस्थाने 'त्वां' इति क्वचित् पाठः ।
१८. ६६ – 'शुचः' इतिस्थाने 'शुच' इति नेपालपाठः ।
१८. ६७ – 'चाशुश्रूषवे' इतिस्थाने 'चाशुश्रुषवे' इति पाठः ।
१८. ६८ – 'य इमं' इतिस्थाने 'य इदं' इति प्रायः पाठः । 'इदं यः' इति क्वचित् ।
१८. ६८ – '°धास्यति' इतिस्थाने '°धास्यते' इति पाठः ।
१८. ६८ – 'मामेवैष्यत्यसंशयः' इतिस्थाने 'स मामेष्यत्यसंशयम्' इति प्रायः काश्मीरपाठः । 'मामेवैष्यत्यसंशयम्' इति क्वचिदुपलभ्यते । 'भविष्यति न संशयः' इति मातृकान्तरे । तथा 'मामेवेष्यत्यसंशयः' इति च ।
१८. ६९ – 'न च मे' इतिस्थाने 'न समस्' इति पाठः ।
१८. ६९—'तस्मादन्यः' इतिस्थाने 'यस्मादन्यः' इति पाठः ।
१८. ६९—'प्रियतरो' इतिस्थाने 'प्रियतमो' इति पाठः ।
१८. ७० – 'इमं धर्म्यं' इतिस्थाने 'इदं धर्म्यं' इति, 'इमं धर्मं' इति, 'इमं धर्मं°' इति च पाठाः ।
१८. ७० – 'स्यामिति' इतिस्थाने 'स्यादिति' इति, 'स्यामीति' इति च पाठौ ।
१८. ७१ – '°ननसूयश्च' इतिस्थाने '°ननसूयुश्च' इति पाठः । '°ननुसूयश्च' इति, '°ननुसूयुश्च' इति च प्रामादिकौ ।
१८. ७१ – 'मुक्तः' इतिस्थाने 'युक्तः' इति पाठः ।
१८. ७१ – '°कर्मणाम्' इतिस्थाने 'कर्मिणाम्' इति पाठः ।

